योगः कर्मसु कौशलम्

AHNIK VARTA PATRAM
Email - ahnikvartapatram@gmail.com

# आह्निक वार्ता पत्रम्

RNI No. : UPSAN/2018/76680

वर्ष-3 अंक 255 संस्कृत दैनिक/ प्रात; संस्करण | प्रयागराज 10 जुलाई 2021 शनिवार | पृष्ठ-4 | मूल्य- 2 रुपये

## सुभाषितम्

न ही कश्चित् विजानाति
किं कस्य श्वो भविष्यति।
अतः श्वः करणीयानि
कुर्यादद्यैव बुद्धिमान्।।

भावार्थ :
कल क्या होगा यह कोई नहीं जानता है इसलिए कल के करने योग्य कार्य को आज कर लेने वाला ही बुद्धिमान है ।

## संक्षिप्त वार्ताः

### दुबाय् राष्ट्रे जबल् अलि नौकाश्रयः अग्निना बाधितः

**नवदेहली।** दुबाय् राष्टे जबल् अलि नौकाश्रये अतिरूक्षा अग्निबाधा सञ्जाता। नौकाश्रये स्थगितायां महानौकायाम् एव अग्निः बादितः। अर्धरात्रौ द्वादशवादने आसीत् एषा घटना। सिविल् डिफेन्स् संघः आगत्य अग्निं निर्वापयत्। कस्यापि जनस्य अपघातः न अभवत् इति दुबाय् माध्यमकार्यालयेन आवेदितम्।

देश 'कोरोणा' इति संक्रमणस्य द्वितीयचरणे सर्वत्र प्राणवायुः समुचितमात्रयां रोगिणां रक्षणाय समुपलब्धा नासीत्

# देशस्य यशस्वी प्रधानमन्त्री मोदी महाभागः प्राणवायुवृद्धि विषये तदुपलब्धतां ज्ञातुमेका संगोष्ठीं समायोजितवान्



**नवदेलही।** प्रधानमन्त्री मोदी महाभाग अद्य सम्पूर्णदेशे प्राणवायुविषये तदुपलब्धतावृद्धिं तथा तत्कीदृशी व्यवस्था वर्तते, अस्मिन्सन्दर्भे एका उच्चस्तरीया गोष्ठी समायोजिता जाता। तत्संगोष्ठ्यध्यक्षतां प्रधानमन्त्री मोदी महाभागः कृतवान्। अस्यां संगोष्ठ्याम् 'पी0एम0 केयर' इति व्यवस्थानुसारम् 'पी0एस0आक्सीजन प्लांट' इति स्थानस्यापि निरीक्षणं कृतवान्। तेन संगोष्ठ्याम् 'कोरोणा' इति विषाणुतृतीयचरणस्य निवारणाय कीदृशी व्यवस्था वर्तते, एतदर्थमपि विशेषचर्चा कृता। ध्यातव्यम्, देश 'कोरोणा' इति संक्रमणस्य द्वितीयचरणे सर्वत्र प्राणवायुः समुचितमात्रयां रोगिणां रक्षणाय समुपलब्धा नासीत्। प्रधानमन्त्री महाभागः निर्देशितवान्, अधुना वयम् 'कोरोणा' इति संक्रमणस्य ग्रस्तजनानां कृते प्राणवायुः पर्याप्तमात्रायां समुपलब्धं कारिष्यन्ति। एका लघुत्रुटिरपि सर्वेषां कृते भयप्रदा भविष्यति । अत एव वयं सर्वे देशवासिनः परस्परं सहयोगेन 'कोरोणा' इति विषाणुतः संरक्षणार्थं प्राणपणेन सुरक्षा करिष्यामः।

### प्रधानमन्त्री महाभागः निर्देशितवान्, अधुना वयम् 'कोरोणा' इति संक्रमणस्य ग्रस्तजनानां कृते प्राणवायुः पर्याप्त मात्रायां समुपलब्धं कारिष्यन्ति




### 'कोरोणा' इति महामारीं प्रति यानि राज्यानि समुचितमुपचारं कारयितुं सक्षमानि न सन्ति

तेषां कृते केन्द्रस्य एक दलः समागत्य तेभ्यः सम्यक् प्रशिक्षणं प्रदानं करिष्यति देशस्य कतिपय राज्येषु 'कोरोणा' इति विषाणुप्रभाववृद्धिं दृष्ट्वा केन्द्रस्य कृते चिन्ता जाता। अस्मिन्सन्दर्भे येषु राज्येषु केन्द्रसर्वकारः यद्दलं सम्प्रेषितवान्, तत्रैव केषुचिद् राज्येषु पत्रं विलिख्यापि एतदर्थं सावधानमकरोत्।



### प्रयागराजे 180 पर्यंकस्य (बेड) पीआईसीयू निर्मितं सज्जीभूतं



**प्रयागराजः। वार्ताहरः।** स्वरूपरानी नेहरू चिकित्सालये प्राणवायोः (आक्सीजनस्य) 2 संयन्त्रे निर्मिते, सर्वेषु 23 विकास खण्डेसु अपि भविष्यन्ति संयन्त्राणि। रूग्णानां पर्यंकानि अपि सम्बर्धयन्ति।

# चंपत रायं राष्ट्रीयस्वयंसेवकसंघः चित्रकूटे आहूतवान्



### संघस्य अधिवेशनेऽपि आहूतं

**अयोध्या। वार्ताहरः।** चंपत रायंअनिलमिश्रं च श्रीरामजन्मभूमि न्यासतः दूरीकर्त्तुं शक्यतेनव भूमिक्रये अवरोधः प्रयुक्तः। अयोध्यायां राममन्दिराय कथिते भूमिक्रय भ्रष्टाचारं अधिकृत्य राष्ट्रीय स्वयंसेवकसंघः प्रतिक्रियायाः पक्षेदृष्टिगोचरः भवति।संघस्य सरकार्यवाहः भैयाजीजोशी न्यासं अधिकृत्य रणनीति निर्माणे संलग्नः अस्ति। सः शीघ्रमेव अयोध्यां प्रतिगन्तुं शक्यते। ब्रुवते यत् श्रीराम जन्मभूमि तीर्थ क्षेत्र न्यासस्य महासचिवं चम्पतरायं चित्रकूटे चलमाणे संघस्य अधिवेशनेऽपि आहूतं। तंन्यासस्य कार्यतः दूरमपिकर्त्तुं शक्यते। चम्पतरायस्य पार्श्वे विश्वहिन्दू परिषदः केन्द्रीय उपाध्यक्षस्यापि दायित्वमस्ति। अतएव स न्यासस्य सहयोगः यथावत् करिष्यन्ति। न्यासस्य सदस्यः डॉ अनिल मिश्रं संघविचार प्रवाहस्य कश्मिश्चित् संगठने दायित्वं समर्प्यतमपिन्यासतः दूरीकर्त्तुं शक्यते। सम्प्रतिन्यासः नवभूमिक्रय प्रकरणे अवरोधः प्रयुक्तवान्।

**न्यासस्य सदस्यः डॉ अनिल मिश्रं संघविचार प्रवाहस्य कश्मिश्चित् संगठने दायित्वं समर्प्यतमपिन्यासतः दूरीकर्त्तुं शक्यते। सम्प्रतिन्यासः नवभूमिक्रय प्रकरणे अवरोधः प्रयुक्तवान्।**



# संस्कृत कक्ष्यायाः प्रसारणम् अपि भवतु -छात्रैः प्रर्थना प्रकाशिता

**आलप्पुष/केरल।** अन्तर्जाल-तत्काल कक्ष्यायां संस्कृतकक्ष्या अपि प्रसारणीया इति छात्राः सर्वकारं प्रार्थितवन्तः। प्राथमिककक्ष्यासु आरभ्य उच्चतर-कक्ष्यापर्यन्तं अन्यविषयवत् तुल्यप्राधान्येन संस्कृतकक्ष्यायाः प्रसारणमपि आवश्यकम् इति ते उक्तवन्तः। ख्यू न्मूँ इति शैक्षिकप्रसारणवाहिनीद्वारा आयोज्यमानासु कक्ष्यासु क्रमानु-गतरीत्या संस्कृतकक्ष्या नास्ति। केरलसर्वकारस्य शैक्षिकविभागेन अस्मिन् अध्ययनकार्यक्रमाणां आयोजनं कुर्वन्ति। संस्कृतं प्रति अनादरः भवति तत्रत्यानाम् इति तेषां कार्याक्र्माणां प्रसारणतः सुव्यक्तं भवति। अनेन कारणेन बुधवासरे



आकेरलं केरलसंस्कृत-अध्यापक-परिषदेन (ख्एऊइ) विप्रतिषेधसमराः आयोजिताः। अध्यापकनाम् आशयेन प्रभाविताः छात्राः अपि आकेरलं गृहेषु एव तिष्ठन्तः सन् स्फोरकपत्रे स्वाशयान् विलिख्य कक्ष्यायाः प्रसारणाय प्रार्थितवन्तः अभवन्।




### मतदानं अद्य

**प्रयागराजः। वार्ताहरः।** विकास खण्ड प्रमुखानां पदेसु श्वः निर्वाचनाय मतदानं भविष्यति। आरक्षीदलम् पुनः पुनः निरीक्षणाय तत्परंभवतिस्म। विकास खण्डप्रमुख पदेसु निर्वाचने पदं निर्विरोधं विजितुं यत्नशीलाः प्रत्याशिनः प्रयतन्तेस्म। अद्य एव नामांकन परावर्तनस्य अवसरः विद्यते।

छायाकारः सौरभ कुमार

## सम्पादकीयम्

# राजनीतिक दलानि सत्ता प्राप्तये किंचिदपि कर्त्तुं सज्जिताः सन्ति

अद्यापि राष्ट्रे अनेकेषु प्रान्ते निर्वाचनानि भवन्ति येन कारणेन कोरोना दिशा निर्देशाणां अवहेलना भवति। अनेन राष्ट्रस्य नागरिकान् इदम् आभासते यत् राजनीतिक दलानि सत्ता प्राप्तये किंचिदपि कर्त्तुं सज्जिताः सन्ति चेत् च सर्वकारः इच्छेत् तर्हि निर्वाचनं पश्चादपि सम्पादितुं शक्यते। जनानां मतानुसारि निर्वाचनं कार्यं अकार्यं वा सर्वकारस्य हस्ते एवास्ति परंच एतादृशः नास्ति। निर्वाचन कार्यस्य दायित्वं निर्वाचन आयोगस्य भवति। आयोगं संविधानस्यान्तर्गते शक्तयः प्राप्ताः सन्ति यस्यां सर्वकारस्य कश्चिदधिकार नैव भवति। चेत् सर्वकारं निर्वाचनकरणस्य तस्य सीमां वा व्यकलनस्य सम्बर्द्धनस्य वा अधिकारः भवेत् तर्हि कश्चिदपि सत्तासीनं दलं येन केन व्याजेन स्व कार्यकालं अग्रे संवद्धर्येत् परंच च एतादृशः नैवास्ति। अस्तु अस्य निर्वाचनस्य व्यवस्था तु शासनस्य अधिकार क्षेत्रात् बहिः आसीत्। यत् भूतं तत्तु सर्व सर्वं कालस्य एव कुटिलागतिः कथ्यते यतः निर्वाचनमेव अपरिहार्यं कार्यं आसीत् यत् निर्वाचन आयोगेन सम्पादितं यथा समये। कोरोना मात्रं एका आपदा अस्ति अस्मिन्नपि काले आगन्तुं शक्यते।

## अमरुकवेर्मुक्तकाः शृङ्गाररस स्यन्दिनः प्रबन्धायमानाः प्रसिद्धा

अमरुकवेर्मुक्तकाः शृङ्गाररसस्यन्दिनः प्रबन्धायमानाः प्रसिद्धा एव। स्यन्दानितकादिषु विकटनिबन्धनौचित्यान्मध्यसमासादीर्घसमासे एव रचने। पर्यायबन्धे पुनः असमासामध्यमसमासे एव संघटने। इतिवृत्तस्य केवलविन्यासत्वात् रसाभिनिवेशस्य नात्यन्तम्। अतः स्वेच्छाचारः। कुलकादिनिबन्धनस्य आधिक्यात् दीर्घसमासायां खण्डकथासकलकथयोर्न विरोधः। अत्र रसानुसारं वृत्तौचित्यमनुसर्त्तव्यम्। सर्गबन्धे रसतात्पर्यात् यथा रसौचित्यम्। अभिनेयार्थे रसबन्धेऽभिनिवेशः कार्य्यः। आख्यायिकायां गद्यस्य गाड़बन्धाश्रयेण शोभाजनकत्वात् तस्य च प्रकृष्यमाणत्वात् भूम्नि मध्यमसमासादीर्घसमासे एव संघटने। कथायां गाड़बन्धप्राचुर्येऽपि गद्यस्य रसबन्धोक्तमनुसर्तव्यम्।

# किञ्चित् कालं यावत् तयोः सङ्केतः न लभ्यते,

स्त्रिया अथवा पुरुषेन स्वजनसमुदायं परित्यज्य अन्यस्थाने प्रस्थानं क्रियते, किञ्चित् कालं यावत् तयोः सङ्केतः न लभ्यते, पत्रमपि नागच्छेत् तर्हि गृहजनाः अतीव दुःखिता भवेयुः। तदा चिन्तामग्नाः ते ज्योतिषसमीपं गत्वा तेषां नाम पलायितजनानां क्षेमवार्तां पृच्छन्ति। एवंरूपप्रश्नः आगमनप्रश्नः इत्युच्यते। एतस्मिन् विषये पण्डितरुद्रमणिः प्रश्नशिरोमणिग्रन्थे एवमकथयत् - तनुपतिस्तनुतुर्यगतेन चेन्मुत्थसिलं विदधाति तथांगपः। कुरिल केन्द्रेगत स्तनुमीक्षते स सुखमेति तदा पथिको ध्रुवम्। अर्थात् लग्नेशः यदि लग्नस्य अथवा चतुर्थग्रहेण सह इत्थसालं करोति अथवा वक्रीलग्नेशः केन्द्रे स्थित्वा लग्नं पश्यति तर्हि पथिकः सुखपूर्वकरूपेण आगच्छेत्। अस्मिन् श्लोके केन्द्रस्थानम् अतिमुख्यमिति मन्यन्ते। अस्य विवरणम् आचार्यवराहमिहिरः एवमवदत् - लग्नात् च्युतिः, चतुर्थभावात् बुद्धिः दशमभावात् प्रवास एवं सप्तमभावात् निवृत्तेः विचारः करणीयः। प्रश्नसमये एतेषु भावेषु स्थितग्रहाणामनुसारेण समस्त शुभाशुभफलं वक्तव्यम्। चतुर्थभावे शुभग्रहस्थिते प्रवासी स्वगृहम् आगतवानिति वक्तव्यम् -

च्युतिर्लग्नाज्ज्ञेया हिबुकगृहतो वृद्धिरुदिताप्रवासः स्यान्मध्याद्भवति विनिवृत्तिः स्मरगृहात्। गृहैरेतत्प्रश्नोदयसमयगैवच्यिमखिलं प्रविष्टः स्वं गेहं हिबुकगृहगे प्रोषितपुमान्। अस्मिन् श्लोके लग्नभावात् च्युतेः विचारः कथितः। अर्थात् अधिकार-त्याग-पदहानि-स्थानान्तरण-वर्षागमन एवं बन्धविमोचनम् इत्यादयः प्रश्नच्युतेः मूलकानि भवन्ति। चतुर्थस्थाने बुद्धेः विचारः उक्तोऽस्ति। अर्थात् पदवृद्धिः-अधिकारवृद्धिः-धनवृद्धिः-यशोवृद्धिः एवं न्यायस्थानम् अथवा मित्रं वा दम्पतिलाभाः इत्यादयः वृद्धिमूलकप्रश्नाः भवन्ति। दशमभावात् प्रवासविचारः करणीयः अर्थात् यात्रा, विदेशगमन, यात्रायां सुख.दुःख एवं लाभ-हानि इत्यादयः प्रश्नाः प्रवासमूलकाः भवन्ति। सप्तमभावात् निवृत्तेः विचारः करणीयः। अर्थात् यात्रातः पुनरागमनं, रोगान्मुक्तिः, मृत्यु-कष्टनिवृत्तिः तथा तस्करित अपगतवस्तुप्रापणम् इत्यादयः प्रश्नाः निवृत्ति-मूलकाः भवन्ति। एवंरूपेण तस्य ग्रन्थस्य व्याख्याकारः "डॉ. शुकदेवचतुर्वेदी" कथयति -तनुधनसहजस्थाः सर्वखेटा यदि स्युस्तदुपथिक उपैति स्युर्यदा तत्र सौम्याः। हृतगतनरवस्त्वाप्तिर्यदा जीवशुक्रौ द्रुततरमुपयात्येव स्वदेशे हि पान्थः। अर्थात् लग्नात् द्वितीये, तृतीयभावेषु सर्वग्रहाः स्थिताः चेत् पथिकाः आगमिष्यन्ति। यद्युक्तभावेषु केवलं शुभग्रह एव भवेत्तर्हि नष्टवस्तुनः प्राप्तिः तथा अपगतवस्तुनः आगमनं भवेत्। यदि केवलं बृहस्पतिशुक्रौ एव पूर्वोक्तभावेषु स्थितौ तर्हि पथिकोऽतिशीघ्रं स्वगृहं प्राप्स्यतीति वक्तव्यम्। परन्तु अस्मिन् श्लोके लग्नात् द्वितीये, तृतीयभावेषु प्रवासीजनागमनाय सर्वेषां ग्रहाणां स्थितिः अनिवार्या नास्तीति अस्माकं विचारः भवति। परन्तु अस्माभिः ज्ञायते यत् लग्नात् द्वितीये, तृतीयभावेषु त्रिचतुर्ग्रहाः स्थिता चेदपि प्रवासस्य आगमनसूचना लभत्येव। यदि सर्वग्रहाणां स्थित्यर्थमङ्गीक्रियते तर्हि श्लोकस्य शेषभागः विरुद्धार्थक एव भवेत्।

पण्डितरुद्रमणिः स्पष्टयति यत् लग्नस्य द्वितीये, तृतीयभावेषु केवलबृहस्पतिशुक्रस्थितिरेव यात्राकरणजनान् गृहे स्थापयति नाम नैवगमयतीत्यर्थः। एतेषु स्थानेषु शुभग्रह स्थितश्चेत् नष्टवस्तुनः प्राप्तिः तथा पलायितस्य आगमनं सम्भाव्यते। बादरायणः कथयति यत् लग्नात् द्वितीय-तृतीयभावेषु ग्रहस्थितश्चेदपि यात्री पुनरागमनशीलो भवेत्। केचन ग्रहाः सन्त्यपि शीघ्रगमनमेव सम्भाव्यते। लग्नाद् द्वितीयभवनं तृतीयं वा ग्रहेण संयुक्तम्। दूरगतस्यागमनं प्रवृत्तिमथवा विनिर्दिशति। बादरायणमतानुसारेण लग्नात् द्वितीयतृतीयभावेषु स्थितः ग्रहः अर्थात् पाप अथवा शुभग्रहश्चेत् प्रवासजनागमनसूचना दीयते।

वराहमिहिरमतानुसारेण एवं भवति - लग्नतः सहजपुत्रवित्तगा दूरगागमनशंसितो ग्रहाः। नष्टलम्भनकराः शुभग्रहाः शीघ्रमागमकरौ तु मन्त्रिणौ। लग्नात् तृतीये, पञ्चमे एवं द्वितीयस्थानेषु ग्रहस्थिते तर्हि प्रवासी जनागमनमभि लक्ष्यते। एतेषु स्थानेषु स्थित शुभग्रहः नष्टप्रदार्थस्य लाभं करोति तथैव शुक्रश्चेत् शीघ्रागमनं भवेत्। अस्य श्लोकस्य व्याख्याकरणसमये "डॉ. शुकदेवचतुर्वेदीमहाभागः" कथयति यत् - एतेषु स्थानेषु शुभग्रहभवेत्तर्हि गृहात् पलायिताः, अदृश्यजाताः जीवाः गृहं शीघ्रमागमिष्यन्ति। निर्जीवपदार्थाः अस्मिन् योगे नैव लभ्यन्ते एव। तेषां सर्वानुसारेण एतेषु योगेषु कुटुम्बस्य, भ्रातुः, बन्धु एवं सन्तानस्य प्रीतिकारणेन व्यक्तिः स्वदेशानयनप्रभावशालीं भूमिकां पोषयति।

आर्यासप्ततिग्रन्थे एवं कथितम् -दुश्चिक्यधनसमेतौ गुरुशुक्रावागमं न्नृणाम्। बन्धूपगतावेतौ गृहप्रवेशं क्षणात्कुरुतः। प्रश्नलग्नात् तृतीये तथा द्वितीयभावेषु गुरुशुक्रौ भवेताम् तदा परदेशीजनागमनं सम्पद्यते। यदि गुरुशुक्रौ चतुर्थभावे स्थितौ तर्हि परदेशीजनाः अतिशीघ्रमेव गृहं प्राप्स्यन्तीति वक्तव्यम्। पण्डित रुद्रमणिः लग्नात् द्वितीयतृतीयभावविषये कथयति। परन्तु अन्याचार्याः द्वितीय-तृतीयभावविषये वदन्नपि लग्नं ते नैव अङ्गीक्रियन्ते। केचन द्वितीयतृतीयाभ्यां सह पञ्चमभावमपि अस्मिन् योगे स्वीकुर्वन्ति। परन्तु दैवज्ञजीवनाथस्य मतं तु अन्यथा वर्तते - जीवो वा भार्गवो वाऽपि चन्द्रो वा सुखवेश्मनि। पथिकं गृहमायान्तं जानीयात् प्रश्नवित्तदा।। चतुर्थभावे स्थितः सौम्यग्रहः शीघ्रमेव प्रवासीजनागमनसूचनां ददाति। गमनसम्बन्धप्रश्ने अस्य फलं विपरीतं भवेत्। अर्थात् यात्रीजनस्य अन्यत्रप्रस्थानं नैव सम्भवेत्। किन्तु प्रश्नसिन्धुकारस्य मतमेवं वर्तते - लग्नस्य पार्श्वोपतौ विधोर्वा स्मरस्य वा सौम्यखगौ खगौ वा। एकत्र योगेऽपि गतौ न वेति प्रस्थातुकामो न खलु प्रयाति। लग्नात् चन्द्रः सप्तमभावादद्वितीये तथैव द्वादशस्थाने द्वौ शुभग्रहौ स्थितौ तावपि नान्यग्रहैः युक्तौ चेत् यात्राकामुको जनः यात्रा नैव कर्तुं समर्थो भवेत्। यदि पूर्वोक्तस्थाने गुरुः तथा शुक्रः स्थितस्तर्हि प्रवासी शीघ्रमेवगृहमागमिष्यति। उक्तस्थानेषु अन्यग्रहस्थितश्चेत् प्रवासी दूरदेशं गमिष्यति। परन्तु प्रश्नमार्गग्रन्थे विरुद्धरूपेण उक्तमस्ति यथा -

आरूढे चरभे चतुर्थमृतिगाः सोम्यागृहस्यागमं कुर्वन्त्यर्थसहोत्थगा अपि पुनः प्रस्थाय मार्गागतम्। कर्मेशो विनिवर्तयेन्नवमगो वक्री ततः प्रोषितं मार्गस्थं तमुदीरयेत् द्विष उपेत्यावस्थिते लग्नये। अर्थ (द्वितीयभाव), सहोत्थ (तृतीयभाव ) एतयोः यदि शुभग्रहश्चेत् प्रोषितव्यक्तिः मध्ये मार्गे आगत्य पुनर्गच्छतीति वक्तव्यम् भवति। कश्चिद्ग्रहः सप्तमगोऽरिगो वा केन्द्रे गुरुश्चागमनं करोति। त्रिकोणगो ज्ञो यदि वा भृगुः स्यात्पांथागमश्चेद्विमगुर्मृतिस्थः। यदि कोऽपि ग्रहः सप्तमे वा षष्ठभावे स्थितः, केन्द्रे बृहस्पतिस्थितस्तर्हि पान्थो आगच्छेत्। त्रिकोणे (5,9) बुधः अथवा शुक्रश्चेदपि अदृश्यव्यक्तिः पुनरागच्छेत्। अत्र पण्डितरुद्रमणिः कथयति यत् लग्नात् षष्ठ-सप्तमभावयोः कोऽपि एक अथवा द्वौ ग्रहौ अर्थात् उभयभावं सग्रहञ्चेत् अथवा एक एव भावः सङ्ग्रहश्चेत् केन्द्रे (सप्तमरहितं) गुरुश्चेत् प्रोषितागमनं सम्भाव्येत। एवं प्रकारेण त्रिकोणे बुधशुक्रौ आगमनकारकौ भवतः। सामान्यतया केन्द्रत्रिकोणे शुभग्रहस्थिते 3,6,11 स्थानेषु पापग्रहः शुभफलस्य सूचना ददाति। परन्तु त्रिकोणे एकाकीबुधो वा शुक्रोऽपि निवृत्तिकारको एव।

पण्डितरुद्रमणिः अस्मिन् लघुश्लोके एव अत्यधिकयोगान् उक्तवानासीत्।

(1) लग्नगतगुरुः, षष्ठगतः अन्यग्रहः, लग्नगतगुरुः, सप्तमगत ग्रहः, चतुर्थगतगुरुः वा षष्ठसप्तमस्थानयोः ग्रहः एते मिलित्वा चत्वारयोगान् कुर्वन्ति।

(2) एवं प्रकारेण सप्तमगतगुरुः अथवा षष्ठसप्तमस्थयोः अन्यग्रहस्य द्वौ योगौ, दशमभावगतगुरोः द्वौ योगौ आहत्य अष्टयोगाः भवन्ति।

(3) एवं प्रकारेण पञ्चमे वा नवमे बुधस्तथैव, षष्ठे, सप्तमे भावेषु अन्यग्रहचेत् योगद्वयं सम्भाव्यते।

(4) पञ्चमे नवमे वा शुक्रः, षष्ठे सप्तमे अन्यग्रहाः चेत् योगद्वयं सम्पद्यते। एवम् आहत्य योगचतुष्टयं निर्माति। एवमेव पञ्चमे बुधः, षष्ठे ग्रहः, पञ्चमे बुधः, सप्तमे ग्रह इत्यादि प्रकारेण योगाणां अधिकभेदोऽपि जायते। परन्तु वयं त्रिकोणगतबुधो वा षष्ठसप्तमगतग्रहेण सह द्वौ द्वौ योगौ अङ्गीकुर्म एव। यदि केन्द्रे गुरुः, त्रिकोणे बुध अथवा शुक्रस्यापि श्लोके सम्बन्धमुररीकृत्य अर्थज्ञानेनापि भेदोपजायते।

(5) वयं ज्ञास्यामो यत् केन्द्रे गुरुः, त्रिकोणे बुध अथवा शुक्रस्थिते प्रोषितगमनं शास्त्रानुकूलमेव भवति। विषयोऽयं श्रीदैवज्ञवल्लभायाम् एवं प्रतिपादितोवर्तते -

बृहस्पतौ केन्द्रगते तु कश्चन ग्रहो भवेत् षष्ठगतोऽथ सप्तमः। भवेत्तदा प्रोषित पुरुषागमस्त्रिकोणगे चन्द्रसुते सितेऽपि वा।।11

पण्डितरुद्रमणि कथयति यत् - अष्टमस्थ चन्द्रः केन्द्रे (1,4,7,10) शुभग्रहश्चेत् पापग्रहरहितश्चेत् पथिको लाभपूर्वकसुखसहितं गृहमागच्छेत्। द्वितीये, तृतीये, अष्टमे, नवमभावेषु शुभग्रहः चरराशौ स्थितश्चेत् प्रवासीपुरुषः मार्गमध्येऽस्तीति ज्ञेयम्। चन्द्रलग्नेशौ द्वादशस्थाने अथवा लग्नेस्थितौ चेत् इत्थसालं करोति तर्हि प्रवासी आगमिष्यति। अन्यप्रकारः चेत् विलम्बेन आगमिष्यति। पञ्चमभावे स्थित चन्द्रः, तृतीयस्थग्रहेण सह इत्थसालं करोत्यथवा सप्तमे-अष्टमे-द्वितीये-चतुर्थभावेषु चन्द्रः चेत् प्रवासी आगमिष्यति। परन्तु एतस्मिन् विषये पृथुयशस्य मतं किञ्चित् भिन्नं भवति -

अष्टमस्थे निशानाथे कण्टकैः पापवर्जितैः। प्रवासी सुखमायाति सौम्यैर्लाभसमन्वितः।।12

यदि प्रश्नलग्ने अष्टमस्थाने चन्द्रः स्थितस्तथैव केन्द्रे कोऽपि पापग्रहः न भवति तर्हि प्रवासी सुखपूर्वकं पुनरागमिष्यति। यदि अष्टमस्थ चन्द्रेण सह शुभग्रहः केन्द्रस्थाने भवेत्तर्हि प्रवासी अधिकधनमर्जयित्वा परदेशात् आगमिष्यति। पण्डितरुद्रमणिमतानुसारेण - लग्नचन्द्रौ चरराशौ अथवा चरराशेः नवांशे स्थिते तथैव केन्द्रे (1,4,7,10) 5,11,3 भावेषु शुभग्रहः स्थिते सति प्रवासी आगच्छेद्येव। यदि 3,5,6,9,7 भावेषु वक्रीग्रहः स्थितस्तर्हि प्रवासी शीघ्रगमनं करिष्यति। पृष्ठोदयराशिस्थ चन्द्र (मेष-कर्क-मकर-धनु-मीन-मकरराशिगतचन्द्र) लग्नस्य ग्रहेण सह इत्थसालं भवति चेत् स पथिकः शीघ्रमेव आगमिष्यति। 9,4,2,7 गृहस्वामिभिः सह चन्द्रस्य इशराफ अथवा मुथसिलयोगश्चेत् प्रवासी सन्तोषेण आगमिष्यति। यदि मार्गेशः राशेः परार्धे अस्ति तर्हि विदेशगतपुरुषः शीघ्रमेव निःसन्देहेन आगमिष्यति। 9,4,2,7 भावानामधिपतिभिः सह अथवा चतुर्थग्रहात् नीचगृहे स्थितग्रहेण सह चन्द्रस्य इत्थसालं करोति चेत् बलाधिक्येन अर्थात् ग्रहाणामधिकबलकारणेन विदेशगतपुरुषस्य आगमनं किञ्चिद्विलम्बेन सम्पद्यत इति वक्तव्यम्।

# 'पुरा नवं भवति इति पुराणम्'

उपोद्घातः, मुक्तेः संज्ञा, विप्रपूजामाध्यमेन मुक्तिः, दर्शनमाध्यमेन मुक्तिः, अर्चनमाध्यमेन मुक्तिः, क्रियायोगमाध्यमेन मुक्तिः, अकपटभक्तिमाध्यमेन मुक्तिः, उपदेशपालनमाध्यमेन मुक्तिः, श्रवणमाध्यमेन मुक्तिः, पठनमाध्यमेन मुक्तिः, विष्णुसेवामाध्यमेन मुक्तिः, सत्सङ्गमाध्यमेन मुक्तिः, आत्मसमर्पणमाध्यमेन मुक्तिः, व्रतपालनमाध्यमेन मुक्तिः, गङ्गातीर्थसेवनेन मुक्तिः, उपसंहार इत्यादयः।

वासुदेव परावेदा वासुदेव परासखाः।
वासुदेव परायोगा वासुदेव पराः क्रिया।।
वासुदेव परं ज्ञानं वासुदेव परं तपः।
वासयदेव परो धर्मो वासुदेव परा गतिः।।1

पौराणिकसाहित्यम् सर्वेषाम् अचिन्त्यतत्त्वानां नवरूपायनं भवति। अस्मिन् साहित्ये धर्मदर्शनसमाजार्थनीतिराजनीतिविज्ञानेतिहासभूगोलादय : विषयाः नवरूपेण सन्ति। उच्यते - 'पुरा नवं भवति इति पुराणम्।' अष्टादश उपपुराणेषु कल्किपुराणम् एकतमम्। पुराणेऽस्मिन् जीवस्य मोक्षलाभस्य विषयः सुष्ठुरूपेण वर्णितः। अन्यत् पुराणवत् पुराणमिदं जीवस्य मुक्तिं स्वीकरोति। मूलतः जीवः अविद्यावशात् पुनः-पुनः जन्ममरणचक्रम् आगच्छति गच्छति च। संसारपाशेन आच्छाद्य बहुविधं दुःखं सहते। केवलं कल्किपुराणस्य मार्गेण जीवः गमनकृते सति अपि तद्दुःखम् अनायासेन निराकृतं भवति। तस्मात् अस्मिन् पुराणे मोक्षलाभस्य उपायरूपेण विप्रपूजा, भगवतः कल्केः अर्चनम्, पादवन्दनम्, स्तुतिकीर्तनम्, तीर्थस्नानम्, दानम्, व्रतपालनम्, साधुसङ्गलाभादयः विषयाः उल्लिखिताः भवन्ति। भवार्णवम् अतिक्रमनार्थं एतानि मार्गाणि अपरिहार्याणि। अस्मिन् विषयसन्दर्भे स्वचिन्तनं मया उपस्थाप्यते। मुक्तिशब्दस्य पर्यायवाचकशब्दः भवति मोक्षः। यदा जीवः भोगासक्तिसम्पन्नं जड़देहं त्यक्तवा आत्मस्वरूपं जानाति तदा तस्य मुक्तिर्भवति। उच्यते भागवतपुराणे- 'मुक्तिर्हित्वा अन्यथा रूपं स्वरूपेण व्यवस्थितिः।'2 अपि च निरालम्व-उपनषिदि कथ्यते - 'नित्यानित्यवास्तविचारादनित्यसंसारसमस्त-संङ्कल्पक्षयो मोक्षः।' अर्थात् यदा वस्तुविचारेण नित्यं वस्तुनिर्णितं भवति तदा अनित्यसंसारस्य समुदायसंकल्पस्य विनाशो भवति। सर्वसंकल्पनाशात् जीवस्य मुक्तिर्भवति। पुराणे पञ्चविधा मुक्तयः सन्ति। ताः खलु यथा- सालोक्यमुक्तिः, सामीप्यमुक्तिः, सायुज्य-मुक्तिः, सार्ष्टिमुक्तिः, सात्मतामुक्तिश्च। कल्किपुराणे एतादृश्यः मुक्तयः परिलक्ष्यन्ते।

**अर्चनमाध्यमेन मुक्तिः** ये जनाः दशविधयज्ञैः परिसंस्कृताः, ते एव ब्रह्मणः ब्रह्मवादिनश्च। अमी विप्राः यज्ञाध्यनदान तपस्यावेदपाठेन्द्रियसंयमनैः वेदानुसारेण तन्त्रानुसारेण च भक्तिपूर्वकं हरिं प्रीणन्ति। यो हि ब्रह्मणेन ब्रह्मणीगर्भे जायते, गर्भाधानादिभिः दशविधसंस्कारैः संस्कृतो भवति, यश्च त्रिसन्धायां गायत्रीमन्त्रं जपति, पूजां करोति, तेन सह य एव तपस्वी, सत्यवादी, धीरः, धर्मात्मा स हि यथायथभगवद्भक्तः। स भगवतः विष्णोः सन्तोषविधानार्थं तस्य पूजाप्रकरणं जानाति। तद् ज्ञात्वा सदा आनन्दमयरूपेण स्थित्वा स संसारसागरात् आत्मानं रक्षति। कल्किपुराणे प्राप्यते -

ब्रह्मण्यां ब्रह्मणाद् यातो गर्भाधानादिसंस्कृतः। सन्ध्यात्रयेण सावित्री-पूजा-जप-परायणः। तपस्वी सत्यवाग्धीरो धर्मात्मा त्राति संसृतिम्। विवष्ण्वर्च्चनमिदं ज्ञात्वा सदानन्दमयो द्विजः। ये ब्राह्मणाः यज्ञाध्ययनादिसत्कार्यानाम् सम्यग्भावेन पालयित्वा भगवन्तं कल्किं स्तुवन्ति, तपस्या-दानादिकार्यैः तस्य नाम संकीर्त्तयन्ति, तस्य सेवायां नियुक्तं भवन्ति, ते एव ब्रह्मणाः भगवच्छरीरस्वरूपाः तदात्मकाश्च। वस्तुतस्तु ये मानवाः मायाबलेन सृष्टाः, ते सर्वैव भगवतः कल्केः सारभूतांशमात्रम्। तस्मात् सर्वे तच्छरीरं प्रविशन्ति, लीयन्ते वा। ममांश मायया सृष्टा यतो मायया विशन् लये। एवं विधा ब्रह्मणा ये मत्शरीरं मदात्मिका। विप्रपूजामाध्यमेन ब्रह्मणगणः मृत्तिका-भस्म-चन्दनादिभिः तिलकं दधाति, ललाटदेशतः शिखिनं यावत् धर्मकर्मणः अङ्गस्वरूपोज्ज्वलं त्रिपुण्ड्रधारणं करोति। एतद् त्रिपुण्ड्रमिदं ब्रह्मा-विष्णु-महेश्वराणाम् आवासस्थलम्। अतः तद्दर्शनेन सर्वं पापं सपदि विनश्यति। किञ्च स्वर्गं ब्रह्मणानां करायत्तम्। किमर्थं मन्तव्यमिदं सङ्गच्छते? एतद्विषये पुराणकारः न मौनव्रतम् अवलम्बते। तदुत्तरे तेनोच्यते यद् ब्रह्मणगणस्य वाक्ये वेदः, हस्ते हव्यम्, गात्रे समुदायस्तीर्थं धर्मानुरागश्च, नाभौ त्रिगुणा प्रकृतिः सदा राजते। अपि च सावित्री तस्य कण्ठहारस्वरूपा, अन्तःकरणं तस्य ब्रह्मस्वरूपम्, अनेन वक्षःस्थले धर्म एव सदा पदं करोति। मूलतः भूसुरः भवति ब्रह्मणगणः। अतः ब्रह्मणगणस्य अर्च्चनं सम्मानञ्च सर्वेषां कर्त्तव्यम्। कुतः ते गार्हस्थाश्रमे अवस्थित्यापिभगवद्धर्मं प्रचारितवन्तः। यः खलु ब्रह्मणगणस्य महाभाग्यविषयोऽयं शृणोति, स हि सर्वपापेभ्यः प्रमुच्यते। तेन सह स कलिदोषात् सदा मुक्तिं लभते। तदर्थं तस्य हृदि किमपि भयं न तिष्ठति। उक्तञ्च कल्किपुराणे - महाभाग्यं ब्रह्मणानां सर्वपापप्रणाशनम्। कलिदोषहरं श्रुत्वा मुच्यते सर्वतो भयात्। दर्शनमाध्यमेन मुक्तिः यो पुण्यात्मा भगवत्याः पद्मायाः बाहुलताभ्यां वद्धञ्च तस्याः वदनामृतं पास्यति, तस्य स्वर्गलाभार्थं तपस्या-जपदानादिधर्मानुष्ठानानां किमपि प्रयोजनं नास्ति। यो अलौकिकक्षमतासम्पन्नपद्मायाः अलक-तिलकस-युक्तचञ्चल-कुण्डलमण्डित-विलोललोचनालंकृतम् वदनसुधाकरं द्रक्ष्यति, तस्यापि पुनर्जन्म न भविष्यति। तस्मात् मुमुक्षुजनस्य तद्दर्शनलालसां सदा कर्त्तव्यम्। अत्र उल्लिख्यते - तिलकालकसंमिश्रं लोलकुण्डलमण्डितम्। लोलक्षणोल्लसद्वक्त्रं पश्यतां न पुनर्भवः। क्रियायोगमाध्यमेन मुक्तिः अर्च्चनविषये साधु वर्णनमत्र प्राप्यते। यथा प्रत्यहं प्रातः निस्नातः साधकः नित्यकर्माणि परिसमाप्य च शुचिस्निग्धः सन् आचमनार्थं जलं स्प्रक्ष्यति। तदनन्तरं स्वीयासने उपवेक्ष्यति। तदा केशवकृत्यादिन्यासेन तन्मयीभूत्वा स्वात्मानं विष्णुमयं मत्वा आसनं ग्रहिष्यति। अथ मूलमन्त्रं जप्त्वा पाद्यार्घ्याचमनीयभूषणाद्युपचारैः अर्चयिष्यति।

# 'अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम्'

क्षेमेन्द्रस्य औचित्यविचारचर्चायां काव्यस्य जीवितभूतत्वेन औचित्यं स्वीकृतम्। क्षेमेन्द्रस्य पूर्वे आलङ्कारिकैः औचित्यं न स्पष्टतया स्वीकृतम्। क्षेमेन्द्रस्य औचित्यसिद्धान्तस्य मूलं तावदानन्दवर्धनाचार्यस्य 'अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम्' इति वचनम्। औचित्यं तु सार्वकालिकमेकं स्थिरं तत्त्वम्। औचित्यं विना काव्यस्य शोभा न जायते।

कूटशब्दाः - औचित्यम्, चमत्कारः, संघटना, उचितम्, वक्रता इत्यादयः

भूमिका संस्कृतालङ्कारशास्त्राम्बुधौ काव्यात्मतत्त्व चिन्तने प्रयतमाना आलङ्कारिकाः काव्यविच्छित्ति जनकानलङ्कारादीनङ्गीकुर्वन्ति। केचन रसं केचन वालङ्कारं केचन वा रीतिं केचन वा वक्रोक्तिं काव्यात्मरूपेण स्वीकुर्वन्ति; किन्तु व्यासदासापरपून्यनामा क्षेमेन्द्राचार्यो भिन्नरूपेणौचित्यं काव्यात्मतयाभिप्रैति। विभिन्ने अलङ्कारग्रन्थे औचित्यस्य स्थितिः अधुना मनसि प्रश्नः समुदेति यत्- अस्यौचित्यस्य धारणा क्षेमेन्द्रेण कुत्र प्राप्यते? अथवेदमौचित्यं क्षेमेन्द्रस्य स्वशिरस्प्रसूतम्? अथवेदमौचित्यं पूर्वे एव स्थितम्। अलङ्कारतत्त्वालोचनायामिदं स्पष्टी भविष्यति। वयं भरताचार्यस्य नाट्यशास्त्रानुसन्धानेन जानीमहे यत्- उचितस्थाने उचितप्रयोग एव सर्वथोचितः।भरतेन औचित्यप्रतिष्ठा न कृता, किन्तु नानाभावोपपन्नस्य नानावस्थान्तरात्मकस्य लोकवृत्तानुकरणभूतस्य नाटकस्य प्रमाणीभूते लोके भावाभिनयप्रकृतिपाठ्यछन्दस्स्वरसंगीतादिविषयेष्वनुकूलतां प्रतिकूलतां वौचित्यमनौचित्यं वा स स्वीकरोति।3 औचित्यमन्तरेण सर्वं हास्यतामुपजायते। तथा हि तेनोक्तम् - अदेशजो हि वेषस्तु न शोभां जनयिष्यति। मेखलोरसि बन्धे च हास्यैवोपजायते।। भरतपरवर्तिभामहेनौचित्यशब्दो नोल्लिखितः किन्त्वौचित्यस्य धारणा तेन प्रदत्ता। तन्मते दोषः कदाचिददोषत्वेन प्रतिपाद्यते-

1. शब्दसन्निवेशविशेषात्। 2. आश्रयसौन्दर्याच्च।

यथा स्रक्षु नीलं पलाशं सौन्दर्यं जनयति। तथा शब्दसन्निवेशविशेषाद्दुरुक्तमपि शोभते। पुनश्च रमणीनयनयोर्यथाञ्जनं शोभां जनयति तथा आश्रयसौन्दर्यादपि शोभां धत्ते। यथा 'अपाण्डुगण्डमेतत्ते वदनं वनजेक्षणे'- इत्युदाहरणे सन्निवेशविशेषात् गण्डपाण्डुशब्दयोः प्रयोगोऽदोषत्वेन प्रतिपादितः। पुनश्च 'विक्लिन्नगण्डानां करिणां मदवारिभिः' इति। 'मदक्लिन्नकपोलानां द्विरदानां चतुष्शती' इत्युदाहरणद्वये क्लिन्नगण्डशब्दयोः दोषत्वमाश्रयसौन्दर्याददोषत्वेन संस्थापितम्। भामहस्यात्र व्यक्ताभिप्रायस्तावत्कविना साधुशब्दाः प्रयोगी क्रियन्ते चेत् शब्दसन्निवेशविशेषादाश्रय-सौन्दर्ययाद्वा व्यवह्रियन्ते। अर्थादौचित्य वशाच्छब्दप्रयोगे दोषो नोपजायते। भामहेन विषयोऽयमुदाहरणेन दृढ़ीक्रियते- ग्राम्यं सुरभि कुसुमं त्याज्यम्; किन्तु स्रक्षूपयुक्तस्थानविन्यासविरचितत्वात् शोभां धत्ते तथा काव्येष्वपि। दण्डिनः काव्यादर्शे औचित्यशब्दो नेक्ष्यते। तन्मते कवि कौशलात्कदाचिद्विरोधो दोषगणनामुत्क्रम्य गुणवीथीं विगाहते। दण्डिनः 'कविकौशलात्' इति पदेनौचित्यवत्पदप्रयोगोऽव्यक्ततयोल्लिखितः। नवमशताब्द्यां रुद्रटस्य काव्यालङ्कारे ध्वनितं यत्- रीतिषूपयुक्तस्थानेष्वौचित्यवशाद्रसप्रयोगः समुचितः। दशमशतकस्य भोजराजेनाप्यनुरूपतयानुसरति दण्डिनो वक्तव्यम्। भोजदेवस्य मते जात्यादीनां शब्दालङ्कार संज्ञा। धारेश्वरभोजदेवेन चतुर्विंशतिप्रकारकाः शब्दालङ्कारजातयः स्वीकृताः। जातेः लक्षणप्रसङ्गे तेनोक्तम् - तत्र संस्कृतमित्यादिर्भारती जातिरिष्यते । सा त्वौचित्यादिभिर्वाचामलङ्काराय जायते। तन्मते औचित्याकृष्ट एवालङ्कारः। पुनश्च तेन वाच्यविषयदेशसमयौचित्यः दर्शिताः। अनन्तरं गतेरलङ्कारत्वनिर्णयप्रसङ्गे तेन गदितम् -

पद्यं गद्यं च मिश्रं च काव्यं यत्सा गतिः स्मृता। अर्थौचित्यादिभिः सापि वागलङ्कार ईष्यते।।

अर्थौचित्यः व्याख्यानप्रसङ्गे उच्यते कथाख्यायिकादौ गद्यमेव चम्पूप्रभृतौ मिश्रमेवेत्यादि पदोपात्तबन्धोचिती द्रष्टव्या इति। प्रयोगव्यवस्थाया उपपादनसमये भोजदेवेनोक्तम् - यथामति यथाशक्ति यथौचित्यं यथारुचि। कवेः पात्रस्य चैतस्याः प्रयोग उपपद्यते।। अत्र मतिर्व्युत्पत्तिः। तत्र शक्तिव्युत्पत्ती कवेरेव। औचित्यं तु पात्रस्यैव। वाग्भटस्य काव्यानुशासने रसाविघातकेषु शब्ददोषेष्वनुचितार्थशब्ददोषः संलोचितः। पदे वाक्ये चानौचित्येन यत्प्रयुक्तं तदनुचितार्थम्।11 षोडशप्रकारकेष्वर्थदोषेषु भिन्नसहचरत्वमुल्लेखनीयम्। तत्रोचितसहचारिभेदस्य कथोल्लिखिता। समालङ्कारस्य स्वरूपनिर्णयसमये औचित्यं समाहृतम्। पुनश्च स्त्रीणामष्टावस्थावर्णनाप्रसङ्गे वासकसज्जाया लक्षणं लक्षितम्- 'उचिते वासके प्रगुणीकृतसर्वोपकरणा वासकसज्जा।' आनन्दवर्धनेन तस्य ध्वन्यालोके अलङ्कारौचित्य-ध्वन्यौचित्य-वृत्तौचित्य-संघटनौचित्य-प्रबन्धौचित्य-रसौचित्यादिरूपेण औचित्यस्य विभिन्नाः स्थितयः वर्गीकृताः। ध्वन्यालोकस्य तृतीय उद्योते तेन संघटनायाः स्वरूपोद्भावने मनोनिवेशः कृतः। तत्र औचित्यस्य आवश्यकता दृश्यते। संघटना त्रिविधा- असमासा, मध्यमेन समासेन भूषिता, दीर्घसमासा च। किन्तु अस्याः संघटनाया आश्रयः कः? नियामकः कः? कार्यं किम्? इत्येतद्विषये आनन्दवर्धनाचार्येण उक्तम् - गुणानाश्रित्य तिष्ठन्ती माधुर्यादीन् व्यनक्ति सा। रसान् तन्नियमे हेतुरौचित्यं वक्त्रिवाच्ययोः। माधुर्यादिगुणाः भवन्ति आश्रयाः, रसद्योतनं तस्य कार्यम्, वक्त्रिवाच्ययोः औचित्यं तन्नियामकत्वम्। वक्त्रिवाच्ययोः औचित्याभावात् काव्यस्य रसप्रतीतौ अभावो जायते। यथा करुणविप्रलम्भ-शृङ्गारयोस्त्वसमासा संघटना, किन्तु अत्र दीर्घमध्यमसमासानां प्रयोगे वक्तृवाच्योः औचित्याभावात् ध्वन्यात्मभूतरसाभावात् न तु काव्यमास्वाद्यते।पुनश्च रौद्ररसे मध्यमसमासस्य औचित्यम्। कथानायकः यदि धीरोद्धतो भवति तर्हि संघटना भवति दीर्घसमासा। धीरललिते च मध्यमसमासा। किन्तु अस्य नियमस्य अनौचित्यात् रसप्रतीतौ व्यवधायको भवति। वक्तृवाच्यगतौचित्ये सत्यपि संघटनायां विषयौचित्यस्य आवश्यकता वर्तते। विषयौचित्येनापि संघटना नियन्त्रिता भवन्ति।14 प्रबन्धवत् मुक्तकेष्वपि रसबन्धाभिनिवेशिनो भवन्ति कवयः।

# 'लक्षणं हि लक्ष्यम् अभिव्याप्य भवेत्'

अन्येषां जनानां प्रतिपत्तिर्हि शब्दप्रयोगस्य मुख्यं प्रयोजनम्। स्वात्मस्थान् विचारान् अन्यान् प्रति बोधयितुं वक्ता शब्दान् उपादत्ते। वक्त्रा शब्दे उच्चारिते सति उच्चरितः शब्दः अन्यसमवेतं बोधं न जनयति चेत् शब्दप्रयोगस्य वैयर्थ्यं विदितमेव विदुषाम्। किञ्च जगति यावानपि लौकिकः पारलौकिको वा व्यवहारो अनुभवविषयः स सर्वोऽपि प्राधान्येन शब्दाधारित एव भवति। व्यवहारसमर्थचेष्टादिकमपि वस्तुतः शब्देष्वेव अन्तर्भवति। वयं हि तादृशचेष्टया तदर्थबोधकान् शब्दान् अनुमाय तदनुसारं प्रवर्तामहे। चेष्टाशब्दयोरस्ति कश्चन अव्यभिचारसम्बन्धः। अत एव यदा चेष्टया प्रतिपादयिषितो अर्थो नावबुध्यते तदा शब्दा उपादीयन्ते। यत्र च प्रयुक्तैः शब्दैरर्थो नावगम्यते तत्र चेष्टया बोध्यते। वस्तुतः जगति नहि कोऽपि तादृशः प्रत्ययः वर्तते यः शब्दानुगमादृते स्यात्। तदुक्तमाचार्येण भर्तृहरिणा -

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भाषते।।1

अत एव असङ्गात्मन इच्छन्तो योगिनः बाह्यजगतो मन आकृष्य निश्चेष्टा मौनमालम्बन्ते। दिव्यदृष्टयो हि ते योगदृशा सकलं अतीतानागतादिप्रपञ्चं किम्बहुना परमात्मस्वरूपमपि च साक्षात्कृत्य तत्तद्वस्तुस्वरूपं परिचाययितुं काञ्चन शब्दान् शब्दसमूहात्मकानि वाक्यानि वा प्रयुञ्जते। तानि वाक्यानि तत्तत्पदार्थानुगतधर्मबोधकत्वात् लक्षणानि इति उच्यन्ते, यदाधारेण वयं वस्तुनः यथार्थस्वरूपं परिचिनुमः। अत एव वयं लक्षणैकचक्षुष्काः वर्तामहे। ते योगिनः तपस्विनः ऋषयः लक्ष्यस्वरूपसाक्षात्कर्तृत्वात् लक्ष्यैकचक्षुष्काः भवन्ति। 'लक्षणं हि लक्ष्यम् अभिव्याप्य भवेत्' इति नियमः किन्तु तन्नातिव्याप्नुयात् लक्ष्यम् इति तु आवश्यकमेव। अत एव लक्षणकरणात् प्राक् यावल्लक्ष्यस्वरूपज्ञानम् अपेक्षितं, परिमितमतीनाम् अस्माकं तन्न सम्भवति, लक्ष्याणाम् अनन्तत्वात् विप्रकृष्टत्वाच्च। अस्माभिस्तु पुरतः इच्छितानि कानिचन लक्ष्याणि साक्षात्कृत्य तत्सदृशेन अन्यान्यपि सम्भाव्य तदनुगततया लक्षणानि क्रियन्ते। अत एव तत्र अव्याप्त्यतिव्याप्त्यादिदोषाः अपि सम्भाव्यन्ते। तन्निवृत्तये च तत्र परिष्काराः क्रियन्ते। पुनस्तत्र दोषशङ्कायां जातायां सत्यां परिष्का-रान्तरम्, इत्येवं रीत्या वस्तुनो निकृष्टं स्वरूपं उपलक्ष्यते।

परिष्काराणाम् इयं पद्धतिः ऋषिपरम्परात एव अस्माकं संस्कृत-साहित्ये वरिवर्ति । अत एव भगवता पाणिनिना सूत्रं व्यरचि, तस्मि-मन् सूत्रे अव्याप्त्यतिव्याप्त्यादिदोषसम्भावनायां सत्यां वार्तिककृता वार्तिकानि निगदितानि। तद्यथा 'येन विधिस्तदन्तस्य'2 इति तदन्तविधायकं सूत्रं भगवता पाणिनिना विरचितं किन्तु समासप्रत्ययविधौ तदन्तविधिः नापेक्षते। अतः तत्र वार्तिककृता 'समासप्रत्ययविधौ प्रतिषेधः'3 'उगितवर्णग्रहणवर्ज्यम्'4 इति वार्तिकाभ्यां तदन्तविधिविधायकं 'येन विधिस्तदन्तस्य' इति सूत्रं नियन्त्रितम्।

अतः ऋषिपरम्परात एव परिष्काराणाम् अस्माकं पद्धतिः वर्तते इति निश्चप्रचम्। अस्याः परिष्कारपद्धतेः सम्पूर्णेऽपि विश्वे अत्युत्तमम् अवदानम् अस्ति। अस्माकम् आचार्यैः तादृशीयं पद्धतिराविष्कृता, यया विषये परिशील्यमाने मनागपि अर्थसन्देहो न भवति, किन्तु लक्ष्याणां यावत्स्वरूपज्ञानार्थं यल्लक्षणं वर्तते तत्शब्दस्वरूपात्मकमेव। अतः सर्वेषां लक्ष्याणां सर्वप्रवृत्तीनां वा वाक्यार्थाधीनत्वात् विशेषतः भारतीयदर्शनेषु वाक्यार्थनिर्णयशीलनपरैः शब्दतत्त्वविद्भिराचार्यैः स्वस्वशास्त्रवासनया वाक्यार्थो विमृष्टः। तत्र विशेषतः न्यायमीमांसाव्याकरणशास्त्रेषु वाक्यार्थविचारः सर्वाधिकं महत्त्वम् आदधाति। यतः कस्यचित् अर्थस्य तत्त्वं निश्चेयं चेत् तत्र प्रमातृप्रमाणप्रमेयप्रमितीनां नितराम् अपेक्षा जायते। तत्रापि प्रमाणस्यैव मुख्यत्वं वर्तते। तेषु प्रमाणेषु सन्निकृष्टासन्निकृष्टविप्रकृष्टस्थूलसूक्ष्मातीतानागतादिसकलविषयावबोधकत्वात् शब्दप्रमाणस्य सर्वप्रमाणापेक्षया अतिशयितत्त्वं वरिवर्ति। शब्दप्रमाणघटकशब्दशब्देन वाक्यमेव गृह्यते। तत्रैव शब्दशब्दस्य मुख्यत्वात्। पदे वर्णे तु शब्दत्वव्यवहारः भाक्त एव। तदुक्तं भगवता पाणिनिना - 'वाचोऽशब्दसञ्ज्ञायाम्।'5 वाक्यं च पदस-मूहरूपम्। पदञ्च सुबन्ततिङन्तभेदेन द्विविधम्। सुबन्ते सुप्प्रत्ययः, प्रातिपदिकञ्च प्रकृतिः। तिङन्ते तिङ्प्रत्ययः धातुश्च प्रकृतिः। एतेषां सर्वेषां प्रकृतिप्रत्ययार्थानां सुबन्ततिङन्तपदार्थानाञ्च परस्परम् अन्वयप्रकारो निरतिशयं ज्ञायते तदैव शाब्दबोधः सम्यक्तया अवगन्तुं शक्यते नान्यथा। अतः व्याकरणे वैयाकरणभूषणसारे, सिद्धान्तलघुमञ्जूषायां, लघुशब्देन्दुशेखरे, महाभाष्ये, न्याये शब्दशक्तिप्रकाशिकायाम्, व्युत्पत्तिवादे, विभक्त्यर्थनिर्णये, पदवाक्यरत्नाकरे, मीमांसायां भाट्टचिन्तामणौ, भाट्टतन्त्ररहस्ये प्रकृत्यर्थः प्रत्ययार्थश्च आचार्यैः निरूपितः। किन्तु निरूपितेषु विषयेषु क्वचित् क्वचित् स्थले आचार्याणां परस्परं मतभेदो दृश्यते। एवञ्च मतभेदेषूपस्थितेषु सत्सु कस्याचार्यस्य मतं समीचीनमिति प्रश्ने अपरस्य आख्यातत्वञ्च किं बीजमिति विचिन्त्य आन्दोलयमानं मे चित्तम्। अतः स्वाध्यायमात्रेण चक्षुष्मतां विपश्चितां न सन्तुष्टिः जायते इति कृत्वा ते तत्त्वप्रतिपित्सया तेषु तेषु पक्षेषु विभिन्नप्रस्थानैः संशेरते ईहन्ते ऊहन्ते पुनश्च नवीनचिन्तनप्रतिभया अनुसन्धानेन वा निश्चिन्वन्ति सिद्धान्तपक्षम्, आविष्कुर्वन्ति च नवीनं विचारं, समुल्लीयन्ति च नूतनां कामपि सरणिम्। अत एव भगवत्पादैः शङ्कराचार्यैः 'श्रुतिमतस्तर्कोऽनुसन्धीयतामि'त्युक्तम्। अतः प्रकृत्यर्थप्रत्ययार्थनिरूपणप्रसङ्गे मीमांसकानां मतं समीचीनं नैयायिकानां वैयाकरणानां वा इति वाचारयामः।

तत्र प्रप्रथमं नैयायिकमतम् प्रस्तूयते - नैयायिकास्तु 'फलव्यापारौ धात्वर्थः' इति स्वीकुर्वन्ति। 'लकाराणां कृतावेव शक्तिः लाघवात्' इति च मन्यन्ते। तेषां मते कर्तरि शक्तिः न स्वीक्रियते, कृतिमतः कर्तृत्वेन तत्र शक्तौ गौरवात् प्रथमपदेन तल्लाभाच्च। आख्यातार्थे धात्वर्थो विशेषणम्। प्रकृत्यर्थप्रत्ययार्थयोः सहार्थत्वे प्रत्ययार्थस्यैव प्राधान्यात्। प्रथमान्तार्थे आख्यातार्थो विशेषणम्। अनुकूलत्वमाश्रयत्वं संसर्गः। तथा च 'चैत्रो पचति' इत्यादौ 'विक्लित्यनुकूलव्यापारानुकूलकृतिमान् चैत्रः' इति बोधो भवति। 'रथो गच्छति' इत्यादौ रथस्याचेतनत्वात् यत्नशून्यत्वेन व्यापारे आश्रयत्वे वा आख्यातार्थस्य लक्षणा। 'लः कर्मणि च भावे चाकर्मकेभ्यः'6 इति सूत्रे कर्तृकर्मपदे भावप्रधाने। तथा च कर्तृत्वं - कृतिः, कर्मत्वञ्च फलम्। तयोः शक्तौ सूत्रस्वरसः। कर्मप्रत्ययान्ते 'पच्यते ओदनो देवदत्तेन' इत्यादौ 'देवदत्तनिष्ठकृतिजन्यव्यापारजन्यविक्लितिमान् ओदन' इति शाब्दबोधो जायते। 'पश्य मृगो धावति' इति वाक्यस्य शाब्दबोधस्तु अन्यदेशसंयोगानुकूलधावनानुकूलकृतिमन्मृगकर्मकं प्रेरणाविषयीभूतं यद्दर्शनं तदनुकूलकृतिमान् त्वमिति। एवं प्रथमान्तकर्तृवाचकपदसमभिव्याहारे प्रायः प्रथमान्तार्थविशेष्यक एव। क्वचित्तु पश्य मृगो धावति इत्याद्येकवाक्यानुरोधात् तिङर्थभावनाविशेष्यकोऽपि सः। मीमांसकमतम् मीमांसकाः 'फलमात्रं धात्वर्थः' इति स्वीकुर्वन्ति। 'व्यापारो प्रत्ययार्थ' इति च मन्यन्ते। बहूनां धातूनां व्यापारे शक्तिकल्पनापेक्षयाऽल्पानां तिबादिप्रत्ययानां तत्र शक्तिकल्पने लाघवात्। पचति इत्यस्य 'पाकं करोति' इति विवरणात् फलं धातोरर्थः इति आख्यातस्य भावनार्थककृधातुना विवरणाच्च प्रत्ययस्यैव व्यापारार्थकत्वं युक्तम्। विवृयमाणविवरणयोः समानार्थकत्वस्य क्लृप्तत्वात्। भावना च भवितुर्भावनानुकूलः भावकव्यापारविशेषः स्यन्दयत्नसाधारणः। तिङ्प्रत्यये तत्र अंशद्वयं वर्तते- तिङ्त्वम् आख्यातत्वञ्च। तिङ्त्वञ्च तिङ्स्थानिकतिबादिषु एव। आख्यातत्वञ्च सकलतिब्-ादिषु। तत्र लिङः आख्याततत्वतिङ्त्वाभ्यां भावनैवोच्ये। तत्र लिङ्त्वेन तिङ्बोध्या या भावना सा शाब्दीभावना इत्युच्यते। यथा 'स्वर्गकामो यजेत' इत्यत्र यागकर्तुः पुरुषस्य या यागे प्रवृत्तिस्तदनु-कूलो यः भावनात्मको व्यापारविशेषः प्रेरणारूपः सा शाब्दीभावना। सा च प्रवृत्यनुकूलव्यापारविशेषो लोके पुरुषनिष्ठः। वेदे तु पुरुषाभावात् लिङादिशब्दनिष्ठ एव। आदिना तव्यतादीनां सङ्ग्रहः। सा च भावना साध्यम् , साधनम्, इतिकर्तव्यताचेति अंशत्रयमपेक्षते। तत्र पुरुषप्रवत्तिरूपा आर्थीभावना साध्यत्वेनान्वेति। कारणाकाङ्क्षायां लिङादिज्ञानं साधनत्वेन अन्वेति। इति कर्त्तव्यता - उपकारकम्, तच्च कर्मणः प्रशस्त्यज्ञानम् इतिकर्तव्यतया अन्वेति। प्राशस्त्यज्ञानादेव प्रवृत्तिर्ज्ञायते। आख्यातमात्रेण आर्थीभावना उच्यते। स्वर्गादि-इच्छाजनितः यागविषयको यः प्रयत्नः, सा आर्थी भावना। 'रथो गच्छति' इति वाक्ये तु अश्वादेश्चेतनस्य यत्ने आरोप्य तथा प्रयोगः। मीमांसकानां मते कृदर्थकर्त्राऽऽक्षितभावना शाब्दबोधे भासते। तेन पचति इत्यत्र एकाश्रयिका पाकानुकूलभावना इति। पच्यते इत्यत्र एकाश्रयिका या विक्लितिः तदनुकूलचैत्राभिन्नाश्रयिक वर्तमानकालिकी भावनेति। तण्डुलः पच्यते चैत्रेण इत्यत्र एकण्डुलाभिन्नाश्रयिका या विक्लितिः तदनुकूला सांप्रतिकी भावनेति च शाब्दबोधो सञ्जायते।

वैयाकरणानां मतम् - वैयाकरणास्तु 'फलव्यापारौ धात्वर्थः' इति स्वीकुर्वन्ति। तत्र फलानुकूलो यत्नसहितो व्यापारो धात्वर्थः। फलत्वं च 'तद्धात्वर्थजन्यत्वे सति कर्तृप्रत्ययसमभिव्याहारे तद्धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतावत्वम्।' न विभागजन्यसंयोगादिरूपे पतत्यादिधात्वर्थे विभागसंयोगयोः फलत्ववारणाय इदम्। कर्मप्रत्ययसमभिव्याहारे तु फलस्य विशेष्यता। व्यापारस्तु - धात्वर्थफलजनकत्वे सति धातुवाच्यत्वम्। अनुकूलत्वं संसर्गः। अनुकूलत्वं च फलनिष्ठजन्यतानिरूपितजनकत्वम्। इति नागेशः। यद्यपि लोके यदुद्देश्येन क्रियाप्रवृत्तिः तत् फलम्। तथापि अत्र पारिभाषिकं तद् गृह्यते। अन्यथा पाकोद्देश्यायाः बुभुक्षानिवृत्तेः अनिष्पत्तौ 'अपाक्षीत्' इति प्रयोगस्य अनापत्तेः। तथा च 'परोपकाराय सतां प्रवृत्तयः'। 'परोपकाराय वहन्ति नद्यः' इत्यादौ परोपकाररूपफलस्य व्यापारव्यधिकरणस्य सत्वात् प्रवृत्यादिक्रियाणाम् अकर्मिकाणां सकर्मकापत्तेः। 'प्रयोजनम् अनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति विशिष्टोक्तेः किञ्चिदुद्दिश्यैव लोके क्रियाप्रवृत्तिदर्शनेन सकर्मकाकर्मकव्यवहारस्य दुर्बोधाच्च। अतः पारिभाषिकफलमेव ग्राह्यम्। तच्च - कर्तृप्रत्ययसमभिव्याहारे तद्धात्वर्थजन्यत्वे सति तद्धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारताश्रयत्वे सति तद्धात्वर्थवत्वम् इति। 'तण्डुलं पचति' इत्यत्र पच्धात्वर्थः फूत्कारादिव्यापारजन्यत्वे सति तादृशव्यापारनिष्ठविशेष्यतानिरूपितप्रकारतापन्नत्वं पच् धात्वर्थे विक्लितौ वर्तते इति कृत्वा लक्षणसमन्वयः। एवम् 'अग्नेर्माणवकं वारयति' इत्यादौ संयोगानुकूलव्यापाराभावानुकूलव्यापाररूपे धात्वर्थे संयोगानुकूलव्यापाराभावे लक्षणसमन्वयः। अत्र कर्तृप्रत्ययसमभिव्याहारे इति उपलक्षणं, न तु विशेषणम्। तेन कर्तृप्रत्ययसमभिव्याहारे यस्यार्थस्य फलत्वं, कर्मप्रत्ययसमभिव्याहारेऽपि तस्यैवार्थस्य फलत्वं भवतीति बोध्यम्। वैयाकरणभूषणसारे फलव्यापारयोर्धातुरिति प्रायोवादाभिप्रायेण। तन्म-ातम् अनङ्गीकारे सति अन्तं द्वितीयविशेषणं न देयम्। तेन धात्वर्थजन्यत्वे सति तद्धात्वर्थत्वम् इत्येव फललक्षणम्। अत्र जन्यत्वं च आरोपितानारोपितसाधारणं ग्राह्यम्। तेन ईश्वरस्तिष्ठति, पत्ये शेते इत्यादौ नातिव्याप्तिः। ईश्वरस्थितेः पत्युद्देश्यकशयनादेश्च वस्तुतो धात्वर्थजन्यत्वात् स्थितौ शयनादौ च जन्यत्वारोपात्।

अत्र प्राचीनाः - 'फलव्यापारयोः धातुरिति', 'द्विवचनान्तनिर्देशोऽपि सङ्गच्छते।' धातोः फले व्यापारे च पृथक् शक्तिः, न तु फलविशिष्टव्यापारे। एकवृन्तगतफलद्वयन्यायेन पृथगुपस्थितिः खण्डशः एकैव शक्तिरिति वा। विशिष्टशक्तिस्वीकारे पदार्थैकदेशत्वात् फलस्य द्वितीयादिपदार्थान्तरान्वयो न स्यात्। एवञ्च फलस्य व्यापारस्य च विशिष्टविषयैकशक्त्योपस्थितितत्वात् पदार्थैकदेशत्वेन 'तण्डुलं पचति' इत्यादौ फले तण्डुलस्य, 'चैत्रेण तण्डुलः पच्यते' इत्यादौ व्यापारे चैत्रस्य चान्वयो न स्यात्। 'पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन' इति न्यायात्। यत्र विशेषणान्वयः चिकीर्षितः तत्र इतराविशेषणत्वेन इतरनिरूपितविशेषणत्वानापन्नत्वेन ज्ञायमानत्वस्य नियमात्। विशिष्टविषयैकशक्त्या अर्थोपस्थितेः विशेष्यविशेषणभावापन्नत्वेनैव अनुभवात्। अत एव घटपदात् घटत्वविशिष्ट घटविषयैक शक्त्युपस्थितघटत्वे नित्यत्वविशेषणाभिप्रायेण 'नित्यो घटः' इति प्रयोगो न भवति। पदार्थैकदेशे घटे नील इति विशेषणान्वयस्तु भवत्येव। घटस्य इतराविशेषणत्वेन ज्ञायमानत्वात्। वस्तुतः नवीनमते यद्यपि गुरुभूतशक्यतावच्छेदकत्वेन गौरवं तथापि प्राचीनमते शक्तिद्वयकल्पने च महद्गौरवम्। 'पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन' इति व्युत्पत्तेरनित्यत्वेनापि पदार्थैकदेशान्वयो भवितुमर्हति।

# वृष्टिप्रक्रियायाः वर्णनं जलवायुविज्ञानस्य परिचायकमस्ति

विचित्रा हि रामायणकृतिः वाल्मीकेः। जीवनस्य शाश्वतमूल्यानां प्रतिफलितत्वात् रामायणं भुवनविदितम्। संस्कृतवाङ्मये च आदिकाव्यत्वेन रामायणं मूर्धाभिषिक्तस्थानम् अलङ्करोति। वर्षावर्णनं संस्कृतकाव्यानां वैशिष्ट्यं व्यनक्ति। परं श्रीमद्वाल्मीकिरामायणान्तर्गतं वर्षावर्णनमनवद्यम्। वर्षावर्णनावसरे पर्यालोचितं भौगोलिकतत्त्वं वाल्मीकेः वैज्ञानिकतायाः परिचायकम्। विशेषतः किष्किन्धाकाण्डेऽष्टाविंशतिसर्गे वर्षावर्णनावसरेऽनुसृतं वैज्ञानिकचिन्तनं शोधपत्रेऽस्मिन् प्रतिपाद्यते। कूटशब्दाः - रसायनम्, जलवायुविज्ञानम्, वाक्यविज्ञानम्, पदविज्ञानम्, पर्यावरणविज्ञानम्।

श्रीमद्वाल्मीकिरामायणे किष्किन्धावण्डान्तर्गतेऽष्टाविंशतितमे सर्गे षट्षष्टिसंख्यकाः श्लोकाः वर्त्तन्ते। सर्गेऽस्मिन् भगवता राममुखेन वर्षाकालस्य वर्णनं महाकविना वाल्मीकिना कृतम्। वर्षासमये दृश्यमानानां स्वभावसिद्धानां प्रकृतिविकाराणां वाल्मीकीयचित्रणं वैज्ञानिकरूपं धत्ते। कविप्रतिभायाः चरमोत्कर्षप्रतिपादनेन साकं विज्ञानसम्मतानां सूक्ष्मतत्त्वानामवतारणं प्राचीनकवीनां स्वभावः। तत्रादिकविः वाल्मीकिः प्रकृतिचित्रणेन सह वैज्ञानिकसिद्धान्तानां प्रतिपादने सिद्धहस्तः। जलस्य रसरूपेणावतारणं रासायनविज्ञानस्य परिचयं लभ्यते। वृष्टिप्रक्रियायाः वर्णनं जलवायुविज्ञानस्य परिचायकमस्ति। वर्षाकाले नववारिसंलग्नहेतोः पृथिव्याः वाष्पविमोचनं मेघमण्डले विद्युत्स्फुरणञ्चेति द्वे तत्त्वे भूतत्त्वविज्ञानविषयके। वर्षाकाले चेतनाचेतनेषु जातविकाराणां वर्णनं जीवविज्ञानज्ञानाधीनम्। इत्थं वैज्ञानिकदृष्ट्या वाल्मीकीयप्रकृतिचित्रस्य सूक्ष्मावलोकनं प्रस्तुतशोधपत्रेण प्रचेष्टितम्। रामायणं न केवलं काव्यत्वेन प्रसिद्धम् अस्ति। अस्य प्रतिपदं भारतीयसंस्कृतेः वाहकम्। अस्य प्रतिवर्णनं तात्कालिकपरिस्थितेः परिचायकम्। रामायणीयविविधवर्णनासु प्रकृतिवर्णनं तत्त्वनिष्ठं वैज्ञानिकविचारसम्मतञ्च। साम्प्रतिककाले प्राचीनग्रन्थरूपेण रामायणस्य प्रासङ्गिकता वर्त्तते एव। रामायणस्य पुष्पकयानमद्यापि व्योमयानविशेषज्ञानां कृते जिज्ञासाजनकम्। अनुमतः आध्यात्मिकविज्ञानं आधुनिकानां कृते गवेषणीयम्। सम्पूर्णस्य भारतवर्षस्य च भौगलिकविज्ञानं रामायणाधीनं वर्त्तते। भौगलिककारकाणां प्रभावः विषयान्तरेण प्रकृतिवर्णनमुच्यते। कवयस्तु प्रकृतेः उपासकाः। प्रकृतिवर्णनं भौगलिकवर्णनं वा संस्कृतकाव्यानां जीवनम्। आदकिविः वाल्मीकिश्च स्वभावसिद्धः कविः वर्त्तते। तस्य वर्णनायां प्रकृतिचित्रणं वैज्ञानिकरूपं दधाति। अस्यां परिस्थितौ रामायणस्य किष्किन्धाकाण्डान्तर्गते वर्षावर्णनावसरे वाल्मीकिमुनेः वैज्ञानिकचिन्तनं नूनमेव प्रासङ्गिकतां भजते। आधुनिकस्य रसायनविज्ञानस्य मूलस्वरूपं रामायणवर्णितम्। वर्षावर्णनावसरे जलस्य रसरूपेण प्रतिपादनं वाल्मीकेः वैज्ञानिकत्वस्य परिचायकमस्ति। तद्यथा -नवमासधृतं गर्भं भास्करस्य गभस्तिभिः। पीत्वा रसं समुद्राणां द्यौः प्रसूते रसायनम्। अत्र रामस्य सीताविषयकः मनोभावः कविना वर्णितः। रसस्य अयनं गमनं यस्मिन् सः रसायनः। रसायनपदेन समुद्रः उच्यते। द्यौः सूर्यकिरणैः समुद्राणां जलं नववासं यावत् पीत्वा गर्भं धारयति। वर्षाकाले सम्प्राप्ते पुनः द्यौः नवमासधृतगर्भं रसरूपेण जलरूपेण वा प्रसूते। षड्रसानां कारणं रसायनं भवति। यदि सीता संनिहिता साऽपीदानीं नवप्रसूतिः स्यादिति राममनोरथः सहृदयेन गम्य-ते। परं वैज्ञानिकदृष्ट्या रसायनशब्दस्य रासायनविज्ञानस्य वा बीजं रामायणे सर्वप्रथममङ्कुरितमिति निश्चेतुं शक्यते। किञ्च गर्भधारणस्य नवमासातीते प्राणीनां सन्तानप्रसवकालः समायाति इति विषयः आधुनिकचिकित्साविज्ञानाधीनः। वर्षाकालागमनस्य प्राग्लिङ्गज्ञानं विज्ञानविषयकम्। वर्षाकाले सम्प्राप्ते सति आकाशस्य कीदृशं स्वरूपं जायते? मेघमण्डलस्याकृतिः कथं दृश्यते? दिवाकस्य का स्थितिः भवति? एवम्भूतानां जिज्ञासानां दूरीकरणं जलवायुविज्ञानज्ञानाधीनमस्ति। रामायणे च सर्वमिदं वर्षावर्णनावसरे वैज्ञानिकशैल्या प्रतिपादितम्। तद्यथा -

शक्यमम्बरमारुह्य मेघसोपानपङ्क्तिभिः।
कुटजार्जुनमालाभिरलृकर्तुं दिवाकरः।।
संध्यारागोत्थितैस्ताम्रैरन्तेष्वपि च पाण्डुभिः।
स्निग्धैरभ्रपटच्छेदैर्बद्धव्रणमिवाम्बरम्।।
मन्दमारुतनिःश्वासं संध्याचन्दनरञ्जितम्।
आपाण्डुजलदं भाति कामातुरमेवाम्बरम्।।

वर्षाकाले मेघमण्डलं सोपानाकृतिं धारयति। दिवाकरश्च मेघसोपानपङ्क्तेः उपरि विद्यमानः तिष्ठति। आकाशः पाण्डुरवर्णविशिष्टः दृश्यते। किञ्चित् जलसम्बन्धाच्च छिन्नपटैः बद्धव्रणमिव नभोमण्डलं प्रतिभाति। ईषत्पाण्डुजलदविशिष्टम् अम्बरं कान्ताविरहपीड़ितमिव शोभते। श्रीरामस्य विरहावस्थां वर्णयितुकामः कविः वैज्ञानिकशैलीम् आश्रयते। संतप्ता भूमिः जलसंस्पर्शेणागत्य वाष्पं मुञ्चति। ग्रीष्मकालादनन्तरं धरातलं वर्षाकालः समुपतिष्ठते। अतः वर्षाकालात् प्राक् भूमिः शुष्का तिष्ठति। सम्प्राप्ते वर्षाकाले च नववारिप्लुतेन संतप्ता मही उष्णाणां वाष्पं परित्यजति। रामायणे शोकसंतप्तायाः सीतायाः अश्रुविमोचनविषयः वैज्ञानिकरीत्या आदिकविना समुपर्णितः। तद्यथा - एषा धर्मपरिक्लिष्टा नववारिपरिप्लुता। सीतेव शोकसंतप्ता मही वाष्पं विमुञ्चति। वर्षाकाले रवितेजसा पृथिवी संतप्ता भवति।

# 'ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहास पुराणं पञ्चमम्...'

साम्प्रतं शोधपत्रस्य प्रस्तावितो विषयः वामनपुराणे अद्वैतचिन्तनम् । भारतीय परम्परायां मोक्षमार्गस्य गुरुत्वमतुलनीयम्, तत्र अद्वैतचिन्तनं खलु अन्यतम पन्था । वैदिकशास्त्रादारभ्य दर्शनसाहित्येषु अद्वैतचिन्तनस्य विविधानि तत्त्वानि विश्लेषितानि । अद्वैतमार्गस्य मूलप्रतिपादितविषयः 'ब्रह्म सत्यं जगन्मिथ्या, जीवब्रह्मैव नापरः।' अपि च ब्रह्म निर्गुणं निर्विकल्पकं सर्वव्यापकं सच्चिदानन्द स्वरूपञ्चेति। लौकिक धाराप्रवाहे पुराण साहित्यानां सृष्टिः जाता। ब्रह्माविष्णुमहेश्वर-इत्याख्यानां देवतानां प्राधान्येन पुराणानि रचितानि। तत्र प्रपञ्चोऽपि सद्रुपेण स्वीकृतः। परन्तु तत्र अद्वैतचिन्तनस्य प्रभावः परिलक्ष्यते। आख्यानसूत्रानुसारेण विविधतया अद्वैतभावनायाः प्रसङ्गः पुराणग्रन्थेषु चर्चितः। अत्र ब्रह्म सगुणत्वेन वर्णितः। अस्मिन् सगुणब्रह्म प्राधान्यपुराणेषु निर्गुणब्रह्मप्रतिपादकानि अद्वैततत्त्वान्यपि च जीवानां सत्यत्वप्रतिपादकपुराणेषु ब्रह्म सत्यं जगन्मिथ्येति अद्वैतध्वनिः कथं प्रतिफलति, तदेवास्य शोधपत्रस्य निरूपणीय विषयः। मुख्यशब्दाः : वामनपुराणम्, ब्रह्म, अद्वैततत्त्वम्, प्रपञ्चः, वेदान्तम्, जगद्योनि इत्यादयः। उपोद्घातः प्रीयाद्धरिर्हरोऽनेन ब्रह्मानन्देन सर्वदा। पायाच्च प्राणिनः सर्वान् स्वाश्रितान् शुद्धमानसान्।। भारतीयशास्त्रपरम्परायां प्राचीनभारतीयसंस्कृतेः स्वरूपवर्णितेषु प्रमुखशास्त्रेषु पुराणमत्यन्तं गुरूत्वपूर्णम्। तदानीन्तन आध्यात्मिक-सामाजिक परिस्थितिनां कश्चित् शास्त्रसमुहः एव पुराणम् । कृष्णद्वैपायनवेदव्यासेन रचितमिदं पुराणशास्त्रम् । 'पुरा भवमिति' पुराणमित्यस्मिन्नर्थ संयोगेन प्रधानतया द्वैतशास्त्रत्वेन भजते शास्त्रमिदम्। 'पुरा नवं भवति' इत्यप्यवोचत् यास्काचार्यः । प्राचीनसमये पुराणं द्विविधात्मकमिति वर्णितम् , तत्र प्रथमं तावत् प्राचीनवृत्तविषयकानां विद्यास्वरूपम्, अपरं तु विशिष्टसाहित्येषु प्रयुक्तमानमुपलब्धिस्वरूपम् । वस्तुतः अस्मिन् पुराणशास्त्रे विविधदेवतानां तद्गतावतारांशानां च वर्णनं दृश्यते । मूलमहापुराणानि वैष्णवधर्मात्मकभक्तिविशिष्टत्वेन द्वैतसत्तात्मकेन विद्यमानानि भवन्ति । यद्यपि प्राचीनकालीनघटनानां नवरूपेणावलोकनमेव पुराणमिति व्युत्पत्तिदृष्टया ज्ञायते, तथापि भारतीय-परम्परानामाध्यात्मिकचेतनया विष्णुप्रभृतिनां देवानां गुणकीर्तनमेव पुराणेषु परिलक्ष्यते । तत्र पुराणविषये श्रुतौ उक्तमस्ति - 'ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहास पुराणं पञ्चमम्...।' (छान्दोग्योपनिषद् 7.1.2), अर्थात् पुराणं प्राचीनविषयानां संस्कृतिनामाधारग्रन्थः पञ्चमवेदो वा। शास्त्रेऽपि पुराणलक्षणं यथा -

सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितञ्चैव पुराणं पञ्चलक्षणम् ।।

एवञ्च पुराणसाहित्यं तस्येतिहासश्च पर्यालोचनानन्तरमिदं निश्चयेन वक्तुं शक्यो यत् इदं पुराणं प्राचीनराजवंशानां तद्गतराज्ञामाधारित चरित्रवंशेतिहासा नामाकरग्रन्थः इति । अन्यत्र पुराणं द्वैतशास्त्रमिति द्वैताश्रयिनां मतम्। यतो हि पुराणेषु भक्तानां भगवतश्च वर्णनं प्राप्यते। तत्र विविधदेवताकनां तद्गतावतारांशानां वर्णनं दृश्यते। यथा विष्णुपुराणे विष्णोः तद्भक्तानाञ्च वर्णनम्, स्कन्धपुराणे स्वामिकार्तिकेयस्य शैवतत्त्वानां वर्णनमादीनि तत्त्वानि प्रस्फुटितानि। एवञ्च मूलाष्टादशपुराणेषु तत्र तत्र याः भक्त-भगवतयोः आख्यानमूलककथाः वर्तन्ते, तत्रैव द्वैतशास्त्रतत्त्वास्वादनं विहाय किञ्चित् भिन्नास्वादनमपि भवत्येव। वस्तुतः कानिचन पुराणानामध्ययनेन तथा पुराणस्थिततत्त्वानां विश्लेषणेन पुराणसाहित्यं सम्पूर्णतया द्वैतशास्त्रप्रतिपादिततत्त्वमेव विवृणोतीति भाषितुं विशयो उदेति। तत्र महापुराणेषु केषुचित् स्थानेषु द्वैतमतभिन्नत्वमस्तीति दृष्टान्तो। यथा -

1. भागवतमहापुराणस्य मङ्गलाचरणे अद्वैतवेदान्तविहिततत्त्वं प्रतिफलति।
2. विष्णुपुराणे मैत्रेयसंवादे अद्वैतप्रसङगः आयाति।
3. अग्निपुराणे जीवन्मुक्तिस्वरूपं वर्णितं दृश्यते ।

एतेषां महापुराणानां प्राप्ततत्त्वविश्लेषणेन प्रश्नो उदेति यत् द्वैतशास्त्रात्मके अस्मिन्पुराणसाहित्ये अद्वैततत्त्वस्यापि प्रासङ्गिकत्वं दृश्यते न वा? अथवा द्वैतशास्त्रत्वेनाभिधीयमाने पुराणसाहित्ये किमद्वैततत्त्वस्य सामञ्जस्यमस्ति न वेति? एवंविधप्रश्नानां समुत्तरप्राप्तये विष्णुपुराणस्य एकस्य प्रमुखांशस्य विश्लेषणमेवास्य शोधपत्रस्य अन्वेष्टुकामो विषयः । शिवविष्णोः वर्णनात्मकं वामनपुराणमपि उत्कृष्टमेकं महापुराणम्। तत्राप्यात्मज्ञानस्य माहात्म्यं कीर्तितम्। वस्तुतः पुराणवेदान्तयोः उभयोः दार्शनिकतत्त्वपर्यालोचनेन श्रद्धाभक्तिसमर्पणादिनां स्थानमतीव गौरवपुर्णं महत्त्वपूर्णञ्चेति प्राप्यते। परन्तु द्वैतमतावलम्बिनः भक्तिविषयान्तर्गतभक्तभगवतयोः उभयोः सत्यत्वं स्वीकुर्वन्ति, अद्वैतिनः केवलं ब्रह्मणः सत्यत्वे सति इतरमिथ्यात्वं प्रमाणयति। द्वैतिनः पुराणस्य ज्ञानेऽपि द्वैतसत्ताकत्वमारोपयितुं यतन्ते, परन्तु शास्त्रान्यपि सामुहिकतया वेदान्तवर्णितः ब्रह्मज्ञानस्यैव प्राधान्यं भजते। तेनैव रीत्या अत्रापि वामनपुराणे आत्मज्ञानस्य माहात्म्यप्रकटनाय कथयति। ऐदम्प्राथम्येन वामनपुराणमद्वैततत्त्वयोः विषयः विश्लिष्यते। वामनपुराणम् श्रीहरेः वामनावतारसम्बन्धितं वामनपुराणमिदम्। पञ्चदशाध्यायात्मकेऽस्मिन् पुराणे दशसहस्र श्लोकाः विद्यन्ते। विष्णुपरकेऽस्मिन् पुराणे विष्णोः विविधांशानां वर्णनेन सह भगवतः शिवस्यापि माहात्म्यं प्रकीर्तितम्। विशेषतः शैवतीर्थ-उमाशिवविवाह-गणेशावतरणकार्तिकेयचरितान्यादीनि वर्णितानि। वस्तुतः ऋग्वेदस्य प्रथममण्डलान्तगत-विष्णुसूक्तात् बहूनि मन्त्राणि संकेतितानि। वामन-शब्दस्य विष्णुत्वेन प्रयोगः शतपथब्राह्मणे प्राप्यते; वामनो ह विष्णुरास। अपि च विष्णुसूक्ते गोपालकृष्णस्य उक्तम् - वस्तुतः द्वैतात्मके विष्णुपुराणे अद्वैतस्यापि प्रासङ्गिकत्वसंशये ऐदंप्राथम्येन ज्ञातव्यं किं नाम अद्वैतम्? इति चेत् उच्यते - अद्वैतं नाम न विद्यते द्वितीयमिति द्वितीयस्य निषेधपुर्वकात् अद्वितीयम्, तस्य भावः अद्वैतम्। ब्रह्म सत्यं जगन्मिथ्या जीवब्रह्मैव नापरः, परमानन्दस्वरूपं ब्रह्मैव सद्वस्तुः , इतरजगत्प्रपञ्चादयः असदिति हेतोः अवस्तुः इति।

# ईसाईदर्शनम्

**मेरीगर्भतडित्प्रभाप्रबलितो योसेफकोलाश्रितो विश्वप्रेमविधारकोपि जनतासंतारको दैवतः। संसाराश्रितजीवपालनपटुर्देवैः सदा प्रेरितो यीशुखीष्टमहाप्रभुर्विजयते कल्याणकल्पद्रुमः**

एकदा परमेश्वरेण जिब्राइलनामा देवदूतो मेरीं (मरियस)प्रति प्रेषितः , उक्तं च तव सुतो भविष्यामीति । तदानीं मेरी अविवाहिता आसीत् । योसेफेन सह तस्य सम्बन्धः स्थिरीकृत आसीत् । कालान्तरे वेथेलहोमस्थाने रोमराज्ये एकस्मिनश्वशालायां ईशा मसीहस्य अस्यां धरायां उद्भवो जातः ख्री0पू0-4र्थशताब्द्यां डिसेम्बरमासस्य पञ्चविंशतिदिवसे इति प्रामाणिकविषयः । स सर्वेषां विश्ववासिनां त्राणकर्ता । ईसाइजनास्तं धर्मप्रचारकः प्रभुः परमेश्वरस्य तृतीय-सदस्यः मन्यन्ते । वाइवेल परमधर्मग्रन्थस्तस्य । अत्र ईशामसीहस्य आजन्ममृत्यु वृत्तान्ताः समुपवर्णिताः । ईशाईधार्मिकाणां संख्या विश्वे सर्ववृहतीति नात्युक्तिः वाइवेलमतेन ईशामसीहस्य जन्म मरियमगर्भेश्वर प्रभावेण जातमिति पूर्वसिद्धान्तः । नाजरेथग्रामस्य महिला मरियम गलीलिया । तस्याः निर्वन्धः वर्द्धकी यूसुफेन सह संपादितः । यूसुपः दाउदराजवंशी आसीत् । विवाहात्पूर्वं मरीयम गर्भवती विलोक्य यूसुफमनसि सन्देहो जातः । तस्यां रात्रौ देवदूतः स्वप्ने आयातः । तं यीशोः भविष्यद्वृतान्तं प्रोवाच । सोपि तद्वचनं श्रुत्वा मरियमं विवाहं चकार । दुराचारि हेरोदराजभयात् यीशुरक्षार्थं वेथेलहोमं विहाय मिस्रं प्राप्ति जगाम सः। हेरोदमृत्युपश्चात्पुनः युसुफः सपरिवारं नाजरेथग्रामे उवास । द्वादशवयसि

एकदा तत्र यहुदीनां मन्दिरं गत्वा सः धमीपदेशं श्रुतवान् । तन्मनसि ईश्वरीय जिज्ञासा बलवत्तरा जाता । आचार्याः तं शान्तिदातुमसमथीभवन् । योसेफः वर्द्धकी आसीत् । यीशुरपि पितुः सकाशात् पारंपरिककार्ये दक्षोभूत् । पित्रा सह तेन कर्ममयजीवनं व्यतीतम् । यूहन्ना इलीशियायाः पुत्र आसीत् । सः यीशुख्रीष्टस्य मस्तकं जले निमज्ज्य तस्मै महादीक्षां ददाव । ततः प्रभृति यीशोः ज्ञानोदयो संजातः । गभीरध्यानेन समयो व्यतीतः। चत्वारिंशत् 40 दिनानि यावत् गभीरध्यानेन उपवासेन च एकस्मिन् निर्जनस्थाने वसति एकदा एकः राक्षसः (शैतान् )तं प्रत्यायातः । । सः यीशुं कवलीकर्तुं चेष्टितः , किन्तु असफलो जातः । ईश्वरीयेच्छा तस्मिन् जागृता । पश्चात्सः धर्मप्रचाराय प्रवृत्तः । बहुनि चमत्कारकार्याणि तेन संपादितानि । मृतमनुष्यमपि जीवनदानं कृतम् कदाचित् । रोगिणां रोगं विनाशितवान् । क्षुद्रमत्स्य- स्वल्परोटिकाद्वारा सहस्राधिकानां जनानां क्षुधां निवारयामास इति तेषां मत्ती-मरकुम-यूहन्नादी वाइवेलवचनानि प्रणिधानयोग्यानि भवन्ति । यीशु ईश्वरपुत्र आसीदिति तेषां विश्वासः । द्वादशशिष्यान् नीत्वा तेन स्वधर्मं प्रपचार । फलतः तात्कालिकयहुदीनां मध्ये विद्वेषो जागृतः । यीशुः स्वद्वादशशिष्यान् शिक्षयामास ।पश्चात् गालीलीये परिभ्रम्य तत्रत्यानां गृहेषु शिक्षामददात् । जनानां यावतीयरोगं यावतीयदुःखं च न्यवारयत् । एवं तस्य ख्यातिः सर्वत्र प्रचारिता ।

भगवतो यीशोरुपदेशः सर्वेषां कृते आदरणीय आसीत् । सः स्व शिष्येभ्यः सर्वदा कथयामास । तन्मतानुसारं - 'यच्च त्वत्तो याचते तस्मै देहि । यूयं स्वशत्रून् प्राप्ति प्रेम कुरुत, ये युष्मान् शपन्ति तान् आशिषं वदत । ये युष्मान् द्विषन्ति तेषां हितमाचरत । ये युष्मान् अपवदन्ति उपद्रवन्ति च तेषां कृते प्रार्थनां कुरुत । तथा कृते युष्माकं स्वर्गस्थः पिता यथा सिद्धोस्ति तथा यूयं भविष्यथः' । यीशुना धर्मकर्मणः बहु उपदेशः प्रदत्तः। दानस्य महान् महिमा प्रचारितः । ईश्वरस्य प्रार्थनाकरणं यथाकाले उपवासकरणं धनसञ्चयमकरणमिति निर्दिष्टनियमास्तेन प्रवर्तिताः । दुष्ट संघ परिहाराय तस्योपदेशः अलंघनीयः । यतो हि - 'यूयं कूटभाववादिभ्यः सावधाना भवत । ये मेष वेशा युष्मत्समीपमा गच्छन्ति , अन्तरे तु ते ग्रसिष्णवो वृकाः । तत्फलैरेव यूयं तान् निश्चेय्यथ ।कण्टकेभ्यः किं द्राक्षा गोक्षुरेभ्यः किं वा औदुम्बरफलानि जायन्ते वा ? एवमेव सर्वः सुवृक्षः सुफलानि उत्पादयति कुवृक्षः कुफलानि तथा । तेभ्यो दूरीभवत' । इति । अपि च- 'ये मां प्रभो प्रभो इत्यभिभाषन्ते न ते सर्वे स्वर्गराज्यं प्रवेक्ष्यन्ति । यस्तु मम स्वर्गस्तपितुरभीष्टमाचरति स एव प्रवेक्ष्यति' । शिष्यभक्तानां कृते यीशोः महती कृपा आसीत् । असाध्यरोगीणां रोगास्तेन निराकृताः । दासबन्धनात् जनान् ररक्ष । भूताविष्टानपि निरामयान् चकार । यीशुरात्मानमीश्वरपुत्र इति उवाच । यच्चोक्तं तेन- 'हे पितः यदित्थं तव दृष्टौ प्रीतिकरं तदेव सिद्धम् । मम पिता मयि सर्वमेव समर्पितः, पितरं विनापरः कोपि पुत्रं न विजानाति' । इति । अपि च जनान् प्रति तस्य सन्देशः- 'भो परिश्रान्ता भाराक्रान्ताश्च सर्वे मम समीपमायात तेनाहं युष्मान् विश्रमयिष्यामि' ।

ईश्वरविषये यीशोरादेशः इदृश आसीत् । यच्चोक्तं- 'युष्माकं एकैकजनः शासनपदस्य निघ्नो भवतु यतो यानि शासनपदानि सन्ति तानि सर्वाणीश्वरेण स्थापितानि । ईश्वरं विना पदस्थापनं न भवति । इति हेतोः शासनपदस्य यत्प्रातिकूल्यं तद् ईश्वरीयनिरूपणस्य प्रातिकूल्यमेव । अपरं ये प्रातिकूल्यमाचरन्ति ते तेषां समुचितं दण्डं स्वयमेव घटयन्ते । युष्माकं परस्परं प्रेम विनान्यत् किमपि ऋणं न भवतु । यतो यः परस्मिन् प्रेम करोति तेन व्यवस्था सिद्ध्यति । परदारान् मा गच्छ, नरहत्यां मा कार्षीः, चौर्यं मा कार्षीः, मित्यासाक्ष्यं मा देहि, लोभं मा कार्षीः, एताः सर्वा आज्ञा एताभ्यो भिन्ना या काचिद् आज्ञास्ति सापि स्वसमीपवासिनि स्ववत् प्रेम कुर्वित अनेन वचनेन वेदिता । प्रेम्णा एव सर्वा व्यवस्था परिपाल्यते इति' । तन्मतानुसारं -'यदि वा प्राणान् त्यजामः प्रभुनिमित्तं त्यजामः । यदि वा धारयामः प्रभुनिमित्तमिति' । अतएव जीवने मरणे वा सर्वदा प्रभुरेव साक्षात्कारः कर्तव्यः । यादृशं लिखितमास्ते - परेशशपथं कुर्वन् वाक्यमेतत् परावदत् । सर्वो जनः समीपे मे जानपातं करिष्यति ? इति । ईश्वरसमीपे एकैकजनेन निजा कथा कथयितव्या । अद्यारभ्य परस्परं न दूषयन्तः स्वभ्रातुर्विघ्नो व्याघातो वा यन्न जायते तादृशीमीहां कुर्म्महे । ईश्वरस्य सत्यता पितृपुरुषान् प्रति तस्य प्रतिज्ञा च यत्प्रामाण्यं गच्छेत् तस्य दयालुत्वाच्च परजातीया यद् ईश्वरस्य गुणान् कीतर्येयुस्तदर्थं यीशुः त्वकछेदनियमस्य निघ्नोभवद् इत्यहं वदामि । यच्चोक्तं - अतोहं सम्मुखे तिष्ठन् भिन्नदेशनिवासिनम् । स्तुवंस्त्वां परिगास्यामि तव नाम्नि परेश्वर ? अपि च तत्र- हे परजातयो यूयं समं नन्दत तज्जनैः । किंच- हे सर्वदेशिनो यूयं धन्यं ब्रूत परेश्वरम् । हे तदीयनरा यूयं कुरुध्वं तत्प्रशसनम् ? सर्वोपरि यीशोरुपदेशः सर्वेषां दुःस्थजनानां कृते अमृततुल्यमासीत् । तत्पश्चात् तदीयान्तरंगाः भक्ताः तन्मतं प्रचारयामासुः । यीशोः दार्शनिकमतानि दिङ्मात्र प्रदर्शितानि । अलं पल्लवितेन ।

**नन्द प्रदीप्त कुमारः**



## विचाराणां शुचिता परमावश्यकी वर्तते

**ऋषिकेश।** 'श्रीरामकिंकर विचार मिशन' इति संस्थायाः संस्थापक एवम् अध्यक्षः सन्तप्रवरः श्रद्धेयः श्रीमैथलीशरण महाभागः स्वदैनिक सत्सङ्गे 'विचाराणां शुचिता परमावश्यकी वर्तते ' इति विषयमङ्गीकृत्य श्रीरामचरितमानसस्य माध्यमेन समुपदेशितवान्- मद्विचारेण किञ्चदपि महत्त्वपूर्णं नास्ति, यदास्माकं हृदि विचाराणां प्रवाहस्य निरन्तरता सदैव प्रवहमाना भवितव्या। अत्र विचारयेत् यत्प्रवाहनलिकायांमपि भवति, किन्तु प्रवाहस्य धन्यता तु नित्यप्रवाहमाना भगवतीगङ्गा तुल्या भवितव्या। या चिरपुरातनी नित्यनूतना च भूत्वापि स्वपवित्रताकृते स्वनामधन्या वर्तते। यदुद्गमस्थली सङ्गमस्थली च सर्वा धन्या वन्दनीया चास्ति।

पूज्यपादो गोस्वामी महाभागः कथयति-

**'कीरति भनिति भूति भरि सोई।**
**सुरसरि सम सब कर हित होई॥'** इति

मानसदृष्ट्या अस्मत्कीर्तेः समृद्धेश्च सार्थकता तदा भविष्यति यदा सा सर्वेषां कृते हितसाधिका भवितव्या। अत्र हितस्य तात्पर्यं वर्तते, आधिदैविकरूपे सा भगवद्विषयानुरूपा भूयात्। आध्यात्मिकरूपे साऽस्मच्चित्ते शान्तिं सुप्रतिष्ठितां करायित्वा निजस्वरूपज्ञानसम्पन्नं कुर्यात्। अत्राधिभूततात्पर्यं वर्तते यत् सांसारिकव्यवहारे सा कस्यचिदपि कृते कष्टप्रदा न भवेत्। विचाराणां स्वतंत्रतायां यावत् कस्यचिदप्यादर्शं प्रति समर्पिता भूत्वा सा स्वसीमारेखां निर्माय, स्वयमेव कस्याश्चित् परतंत्रतां न स्वीकृतां नाकरोत्, तर्हि तद्विचारं केवलमुच्छृखलतां प्रसूतं प्रदाता भविष्यति। विचारकस्य समुद्देश्यं यदि केवलं साधारणलोकप्रियतां जनरञ्जनं च प्रति भविष्यति, तर्हि सः नवीनविचाराणां नाम्नि नवीनसमस्यायाः रोपणं करिष्यति। अत एव गोस्वामी तुलसीदास महाभागः कथयति-

**' सजल मूल जिन्ह सरितन्हि नाहीं।**
**बरसि गये पुनि तबहिं सुखाहीं॥'** इति।

येषां नदीनां मूलश्रोतः सागरात् न भवति ता वर्षाकालीना कथ्यन्ते तथा वर्षापश्चात् ताः विलुप्ता भूयन्ते। अनेनैव विचाराणामाधारो यदि भक्तिभगवन्तौ च न भविष्यतः तर्हि ते विचाराः स्वाल्पायुभूत्वा मृताः भविष्यन्ते। श्रीरामचरितमानसस्य दृढमान्यता वर्तते, यद्धर्मस्य पुरोधा श्रीगुरुवसिष्ठस्य मान्यता वर्तते, यत् यत्र श्रीरामस्य प्रेमभक्तिप्राधान्यं न वर्तते, तद्योगः कुयोगो भविष्यति। तत्कर्मधर्मौ च भस्मीभूतौ भवेताम्, यन्मूलाधारौ श्रीरामरूपस्याखण्डानादि तत्त्वं न वर्तते। यथोक्तम्-

**'सो सुखु करमु धरमु जरि जाऊँ।**
**जहँ न राम पद पंकज भाऊ॥'**
**'जोगन कुजोगु ग्यान अग्यानू,**
**जहँ नहिं राम प्रेम परिधानू ॥'** इति

श्रीहनुमान् महाभागः लंकेशं रावणमपि एतत्संकेतं कृतवान्-

**'बसन हीन नहिं सोह सुनारी।**
**सब भूषन भूसित बर नारी॥'**
**'राम बिमुख संपति प्रभुताई।**
**पाई रही पाई बिनु पाई॥'** इति।

श्रीरामभक्तिं विना जगत्सर्ववस्तूनि सारहीनानि सन्तीति मे मतिः।

## 'अहमाद्यवर्णैकवचनप्रथमायाः रूपमस्ति' शास्त्रस्य एतद् सामान्यसिद्धान्तं यो न जानाति

'वेदोऽखिलोधर्ममूलम्।' विश्वसाहित्ये वेदानां प्राचीनता सर्वमान्यम् तथा च प्रामाणिकम् जायते। अतः भारतीयपरम्परायां प्रत्येकविषयस्यसम्बन्धवेदेष्वेव अन्वेष्यते। अस्य हेतुत्वात् व्याकरण शास्त्र स्यादिमस्रोतऽन्वेष्णार्थं वेदानामभिमुखं करणीयमिति विद्विद्भिः सर्वदा स्वीक्रियन्ते। वेदाङ्ग नामकरणेनेव स्पष्टं भवति यत् वेदानाम् संहितारूपेषु निबद्धत्वात् षट् (शिक्षा-कल्प-व्याकरण-निरुक्त-छन्द-ज्योतिष) अङ्गानाम् पृथक्रूपेणगणना बभूवुः। वैदिकचिन्तनेन साकम् अर्थानुसन्धानाय शब्दविश्लेषणस्याविर्भावः स्वाभाविको आसीत्। एतत् विश्लेषणहेतुत्वात् अस्य नामव्याकरणमित्यवगम्यते। षड् वेदाङ्गेष्वस्यप्रधानता सर्वशास्त्रेष्वेकमतेन मन्यन्ते। 'मुखं व्याकरणं स्मृतम्।' इतिपाणिनीयशिक्षायाम्। आचार्यभर्तृहरिः स्वग्रन्थवाक्यपदीये व्याकरणशास्त्रं सर्वोपरिः मन्यप्रतिपादयति यत् 'प्रथमं छन्दसामङ्गं प्राहुर्व्याकरणं बुधाः।' संस्कृतभाषायाम् व्याकरणस्य प्रक्रियाऽतिप्राचीना वर्तते। संस्कृतभाषायाः शुद्धस्वरूपज्ञानाय संस्कृतव्याकरणशास्त्रस्याध्ययनं क्रियते। एवमेवविशेषताहेतुत्वात् एषः वेदस्य सर्वप्रमुखऽङ्गं मन्यते। व्याकरणशास्त्रस्यमहत्त्वम् प्रतिपाद्यर्थं एको श्लोको अतिप्रसिद्धः - यस्य षष्ठी चतुर्थी च, विहस्य च विहाय च। यस्याहं द्वितीया स्यात्, द्वितीया स्यामहं कथम्। कथमहं तस्य द्वितीया (भार्या) भवितास्मि। यस्य मत्याम् 'विहस्य' इति पदं षष्ठीविभक्तेः, 'विहाय' इति पदं चतुर्थीविभक्तेः तथा अहम्कथञ्च द्वितीयाविभक्तेः स्थापितोऽस्ति। अत्र ध्यातव्यम् यत् 'विहस्य' पदान्ते 'स्य' इति प्रयोगहेतुत्वात् षष्ठीविभक्तेर्न, एवमेव 'विहाय' पदान्ते 'आय' इति हेतुत्वात् चतुर्थीविभक्तेर्न। एवमेवऽहम्कथञ्चपदान्तयोः मकारवर्णस्यप्रयोगेन द्वितीयायार्नऽवगम्यते। 'अहमाद्यवर्णैकवचनप्रथमायाः रूपमस्ति' शास्त्रस्य एतद् सामान्यसिद्धान्तं यो न जानाति स नितान्तमूर्खोऽस्ति। व्याकरणवेत्तामानवः प्रत्ययविभक्त्य च विषयमार्मिकदृष्टिं अवधारयते। सः जानाति यत् 'विहस्य' तथा च 'विहाय' इत्यव्ययपदम् भवति। एते विभक्तिपदयोर्रूपौ न स्तः। अतः वयमुपहासपात्रं न भवेम तदर्थं व्याकरणशास्त्रस्य ज्ञानमत्यावश्यकं वर्तते। येन शास्त्रेण शब्दज्ञानं भवति तद् शास्त्रं नाम व्याकरणशास्त्रम्। अस्येव अपरनाम शब्दानुशासनम्। व्याकरणं आङ्ग्लभाषायां 'ग्रामर' इत्युच्यते। व्याकरणस्य यावत् सूक्ष्मविवेचनं संस्कृतभाषायां कृतम् तावत् क्वापि अन्यभाषायां नोपलब्धयते। वेदस्य षड्ङ्गेषु व्याकरणमुखमस्ति यः मानवशरीरस्य सर्वप्रमुखाङ्गमस्ति। प्रामाणिकदृष्ट्या वक्तुं शक्यते यत् अनेन शास्त्रेण विना अन्यशास्त्रणां साहित्यज्योतिषित्यादिशास्त्राणां ज्ञानं नितान्तऽसम्भवम्। उक्त च - यद्यपि बहुनाधीषे तथापि पठ पुत्र व्याकरणम्। स्वजनो श्वजनो माऽभूत् सकलं शकलं सकृच्छकृत्। व्याकरणस्य ज्ञानं विना शब्दानां सम्यग्प्रयोगो न भवति। तस्मादेव कारणात् अर्थस्य अनर्थं भविष्यति। यः व्याकरणं जानाति सः एव स्वजनो श्वजनो च विषये भेदः कर्तुं शक्यते। तर्कदृष्ट्याऽपि व्याकरणमतीवमहत्त्वपूर्णं वर्तते। प्रकृतिप्रत्ययस्य विशद् विश्लेषणं व्याकरणेनेव सम्भवम्। निरुक्तकारस्य कथनमस्ति यत् सर्वाणि नामानि आख्यातजानि। धातुः कस्य गणस्य, कस्मिनर्थे प्रयुक्तं तथा च अनेन कस्यऽर्थस्य बोधनं जायते, इदं ज्ञानम् व्याकरणज्ञानेनैव अवगम्यते। व्याकरणवेत्ता शब्दानाम् दर्शनमात्रेणैव तेषाम् मर्मतत्त्वं अवगम्यते। प्रामाणिकतया वक्तुं शक्यते यत् शब्दार्थयोः विश्लेषणस्येकमात्रं साधनं व्याकरणमस्ति। प्रकृतेः मूलज्ञानं विना ज्ञानस्य प्राप्ति नितान्तसम्भवम्। व्याकरणस्य वैशिष्ट्यमेवमेव यत् शब्दे या भावना व्यक्ता तस्या प्रतिपादनं कर्तुं समर्थोऽस्ति। मीमांसकाचार्याः भावनायाः भेदेषु अस्य सिद्धान्तस्य व्यापकनिरूपणमपि क्रियते। केनचिदपि भाषायाम् भाषां अनुशासितसुनियोजिताय च पूर्णदायित्वं व्याकरणशास्त्रेण निर्वह्यते। अस्मात् हेतुत्त्वात् सर्वेभाषावेत्तारः निजशास्त्रेषु व्याकरणं प्रमुखतया प्रतिपादितम्।भाषायाः अङ्गप्रत्यङ्गस्य विवेचनमेवव्याकरणमुच्यते। व्याकरणं तद् विधानामस्ति येन भाषायाः शुद्धोच्चारणम् शुद्धपठनम् तथा च शुद्धलेखनम् समागम्यते। भाषायाः पठनलेखनोच्चारणेभ्यः निर्धारितनियमाः सन्ति। तेभ्यः नियमेभ्यः परिपालनमत्यावश्यकम्। एते नियमाः व्याकरणान्तर्गते आयाति। अतः भाषायाः अध्ययनार्थं व्याकरणाध्ययनमतीव महत्त्वपूर्णमस्ति। भाषायाम् प्रयुक्तशब्देषु प्रकृतिप्रत्यययोः विशद् विश्लेषणमेव व्याकरणम्। व्याकरणं स्वदेशेन भाषां न प्रवृत्तयते अपितु एतत् तु प्रत्युत्तभाषायाः स्थितेः स्पष्ट्यते। यथा 'भवति' क्रियापदमस्ति। व्याकरणमवेत्ता 'भवति' इति क्रियापदं 'भवतीति' इत्यस्मिनर्थे गृह्णाति परञ्च व्याकरणवेत्ताऽत्र जानाति यत् का प्रकृतिः कः प्रत्ययः अर्थात् उभयोः स्थितेः किम्? व्याकरणं स्पष्ट्यति यदत्र 'भू' प्रकृतिः तथा च 'तिप्' प्रत्ययोऽस्ति। तदनन्तरं व्याकरणमेव लोचयति यत् कथं भूधातोः सार्वधातुकसंज्ञा तदुपरान्तगुणादेशः तथा च केनप्रकारेण तिपादीनां प्रत्ययानामुत्पत्तिर्भवति। एवमेवेतद् विश्लेषणमतीवमहत्त्वपूर्णं जायते। अतोक्तं विद्विद्भिः यत् विश्लेषणम् व्याकरणस्यपरममहत्त्वम्। व्याकरणस्यऽपरनाम शब्दानुशासनम्। इदम् शब्दसम्बन्धीः अनुशासनं करोति। शब्दस्य कथं प्रयोगो करणीयमिति व्याकरणमुच्यत्ते। भाषायाम् शब्दानां स्वप्रवृत्तिर्विरमति। वयाकरणेन शब्दाः न अग्रसारितः, करणेनशब्दार्नऽग्रसारितः करोति अपितु भाषायाः प्रवृत्त्यानुसारेण शब्दप्रयोगं निर्दिष्टयति। एतत् भाषामुपरि शासनं न क्रियते, अपितु तस्याः स्थितिप्रवृत्त्यानुसारेण लोकशिक्षणं करोति। एषः व्याकरणस्य महत्त्वम्। यदा वयं व्याकरणशास्त्रस्य परममहत्त्वे चर्चाकुर्मः तदा जानीमः यत् व्याकरणेन भाषायाः गतिर्न रूणद्धि तथाच न हि व्याकरणेन परिवर्तितः भवति। किम् कश्चित् क्षेत्रविशेषस्य भूगोलः तत् स्थानस्य गतिविधिं रुणद्धि परिवर्तितो वा? भाषा तु निरन्तरं प्रगतिशीलः। व्याकरणं न तु तस्य नियामकः न च तस्य अवरोधकः। सहस्त्रवर्षाण्यनन्तरं यदा कोऽपिभाषा अन्यत् रूपे विस्थापिता तदा इयम् स्वरूपाय नवीनव्याकरणस्यरचना जायते। अधुना महत्तोयम् वर्तते यत् पुरातनव्याकरणं तदापि व्यर्थं न भवति। तस्याः

## नूनं व्याकरणं कृत्स्नमनेन बहुधा श्रुतम् बहु व्यावहारतानेन न किञ्चिदपभाषितम्

पुरातनभाषायाः यथार्थपरिचयम् निवेदयते। एषः व्याकरणशास्त्रस्य अनुपममहत्त्वमस्ति। व्याकरणवेत्ताजनः प्रत्यक्षदर्शीः जायते। अस्याः उक्तेः प्रतिपादनार्थमुक्तञ्च महाभाष्ये -

सर्वार्थानां व्याकरणाद् वैयाकरणमुच्यते।
प्रत्यक्षदर्शी लोकानां सर्वदर्शी भवेन्नरः।।

एवमेवाचार्यभर्तृहरिः स्वग्रन्थवाक्यपदीये व्याकरणशास्त्रं उच्चकोटिः पवित्रशास्त्रं मन्यते।

आपः पवित्रं परमं पृथिव्यामब्भ्यः पवित्रं च मन्त्रः।
तेषां च सामग्र्यजुषं पवित्रं महर्षयो व्याकरणं निराहुः।।

तैत्तिरीयोपनिषदि व्यकरणस्य महत्त्वं विषये वर्णितम्- ओङ्कार पृच्छामः को धातुः?, किं प्रातिपदिकम्? किं नामाख्यातम्? किं वचनं? किं लिङ्गम्? का विभक्तिः? कः प्रत्ययः? कः स्वरः? उपसर्ग नियतः, किं व्याकरणम्? को विकारः? को विकारी? कति मात्रः? कति वर्णाः?

व्याकरणवेत्ता असाधुशब्दानां प्रयोगं तथाच किञ्चिदप्यपभाषणं कदापि न करोति। सः जानाति यत् शब्दस्य ज्ञाने धर्मः तथा अपशब्दस्य ज्ञाने अधर्मः। साधुशब्दानां प्रयोगेनमानवः श्रीरामभक्तहनुमानवत् प्रशंसायाः पात्रे भवति। अञ्जनिपुत्रस्यविषयेवर्णितम् -

नूनं व्याकरणं कृत्स्नमनेन बहुधा श्रुतम्।
बहु व्यावहारतानेन न किञ्चिदपभाषितम्।।

आचार्यदण्डिनः एषोक्तिः स्वतः शब्दस्य महत्त्वम् प्रकटयति।

इदमन्धतमः कृत्स्नं जायेत भुवनत्रयम्।
यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते।।

व्याकरणे प्रकृतिप्रत्ययस्य विचारः, उदात्तादिस्वरविचारः, उदात्तादिस्वरसंचारनियमाः, सन्धिनियमाः, शब्दरूपधातुरूपादिनिर्माणनियमाः, प्रकृतेः प्रत्ययस्य च स्वरूपावधारणं तदर्थं निर्धारणं च विविधाः विषयाः विविच्यन्ते। वेदेषु सर्वशास्त्रेषु च प्रकृतिप्रत्ययविचारस्य प्रकृष्टं महत्त्वम् परिगण्यते। तत्र व्याकरणमेव साहाय्यमनुतिष्ठति।

दैनिन्दिनीप्रयोगेऽपि अस्यशास्त्रस्यमहत्त्वम् अनुभूयते। बहवः जनाः मर्त्यलोकमित्यस्य स्थाने मृत्युलोकमित्युच्चारणम् कुर्वन्ति। वस्तुतः शब्दस्यशुद्धस्वरूपं मर्त्यलोकम् भवति। यथोक्तं नारदमुनिना भगवानसत्यनारायणकथायाम् 'मर्त्यलोके जनाः सर्वे नानाशोक' इति। एवमेव 'शापम्' इत्यस्य स्थानम् 'श्रापम्', 'विद्यालयम्' इत्यस्यस्थाने 'विद्यालयम्।' अन्यऽपि अनेकान्युदाहरणानि सन्ति। कथनस्य तात्पयमस्ति यत् व्याकरणवेत्तानरो एव शब्दस्य शुद्धरूपं ज्ञातुं शक्यते। सः जानाति यत् शब्दस्यज्ञाने धर्मः तथा अपशब्दस्यज्ञाने अधर्मः भवति। व्याकरणेनैव मानवव्यवहारे कुशलता आगच्छति। अस्य शास्त्रस्य महत्त्वं प्रतिपाद्यर्थं एको श्लोको बहुप्रसिद्धोऽस्ति। उक्तञ्च -

व्याकरणेन विना वाणी, रमणी रमणं विना।
विवेकेन विना बुद्धिः, न सुखाय कदाचन।।

## रसबन्धोक्तमौचित्यं भाति सर्वत्र संश्रिता

**रसबन्धोक्तमौचित्यं भाति सर्वत्र संश्रिता।**
**रचना विषयापेक्षं तत्तु किञ्चित् विभेदवत्॥**

अस्याः कारिकायाः वृत्तावुक्तम्- 'विषयापेक्षं त्वौचित्यं प्रमाणतोऽपकृष्यते प्रकृष्यते च।' अर्थात् विषयमूलकमौचित्यं रसमपेक्षते। विषयमूलकमौचित्यं रसौचित्यानुसारं गृहीतमगृहीतं वा। यथा - आख्यायिकायां नात्यन्तमसमासा स्वविषयेऽपि नाटकादौ नातिदीर्घसमासा चेति संघटनायाः दिगनुसर्त्तव्या। ननु प्रबन्धस्य व्यञ्जकत्वम्। प्रबन्धारसादीनां व्यञ्जकः। तस्य व्यञ्जकत्वे 'पूर्वं हि कथा परीक्षा। तत्राधिकावापः फलपर्यन्तानयनं रसं प्रति जागरणं तदुचितविभावादिवर्णनेऽलङ्कारौचित्यमिति।' (लोचनटीका)। विभावानुभावसञ्चार्य्यौचित्यचारुणः कथाशरीरस्य प्रकाश एव विधिः। तत्र विभावौचित्यं तवत्प्रसिद्धम्। भावौचित्यं तावत्प्रकृतौचित्याद् भवति उत्तममध्यमाधमभावात् दिव्यमानुषादिभावाच्च प्रकृतौचित्यं विविधप्रकारकं भवति। यथायथ प्रकृत्यनुसारि स्थायिभावोप निबन्धनमौचित्यानुसारि। रसानुकूलविषयस्य योजनं कर्तव्यम् इतिवृत्तविषयो यदि रसानुसारि न भवति तर्हि तं परित्यज्य रसानुसारिणः कल्पितविषयस्य प्रयोग एव समुचितः। एतेन न दोषः। शास्त्रसमापनेच्छया न रसाभिव्यक्तये सन्धिसन्ध्यङ्गानां योजनं कर्तव्यम्। काव्यस्य प्रयोजनानुसारं कुत्रचिद्रसस्योद्दीपनप्रशमनयोरभिनिवेशः कर्तव्यः। अङ्गिरसाभिव्यक्तिं प्रति दृष्ट्यर्पणम्। कविः स्वशक्ति प्रदर्शनार्थं न रसादेरभिव्यक्तये औचित्यमूलकान् अलङ्कारादीन् योजयति। अतः प्रबन्धे प्रसिद्धानुसार मौचित्यबन्धस्य विन्यास एव रसस्य श्रेष्ठो निदर्शकः। तथा हि नाट्यशास्त्र आदिष्टं- 'प्रख्यातवस्तुविषयत्वं प्रख्यातोदात्तनायकत्वं च नाटकस्यावश्यक कर्तव्यतयोपन्यस्तम्।

प्रेरणाश्रोत
जगदगुरू शंकराचार्य ज्योतिषीपीठ काशी पीठाधीश्वर ब्र.ली. स्वामी विद्यानंद सरस्वती जी महराज (मौनी जी), शाश्श्वतानन्द सरस्वती जी महाराज।

संरक्षक मण्डल
योग गुरू स्वामी आनन्द गिरि जी (बांध स्थित बड़े हनुमान जी )
डॉ भगवत् शरण शुक्ल
प्रोफेसर-व्याकरण विभाग-संस्कृतविद्या धर्मविज्ञान संकाय काशी हिन्दू विश्वविद्यालय वाराणसी
प्रमोद बंसल
निदेशक-महारानी चाय, प्रयागराज

सलाहकार
श्रीमती अनामिका चौधरी (सदस्य राज्य महिला आयोग)
डा. पुष्पा पाल (एमजीएम हास्पिटल)
- सुनील सराफ (अवतार केमिस्ट)
-पं. देवेन्द्र प्रसाद त्रिपाठी
-एसो. प्रो. डॉ. मुरली मनोहर द्विवेदी
-डॉ. शम्भुनाथ त्रिपाठी (अंशुल)
-डा. मोरार जी त्रिपाठी
-आचार्य कुशलदेव ( प्रवक्ता गुरुकुल महाविद्यालय ततारपुर हापुड़।)
-महेश जी कपूर
डा. कृष्णानन्द पाण्डेय
फादर - थॉमस कुमार
उपसम्पादक - विनम्र शुक्ल
विशेषवार्ताहरः
डॉ प्रदीप्त कुमार नंदः

प्रयागराज ( इलाहाबाद )
RNI No. : UPSAN/2018/76680
स्वामी मुद्रकः प्रकाशकश्च **आनन्द नारायण शुक्ल** द्वारा रमा प्रिन्टिग प्रेस, 53/25/1,ए बेली रोड, नया कटरा, प्रयागराज से मुद्रित एवं 1286बी/541बी नेहरू नगर मीरापुर, प्रयागराज से प्रकाशित।
मो.-9415633297
संपादक-राकेश शर्मा